उस्रः ऊसो । विस्रम्भः वीसम्भो ॥ सलोपे—निस्सहः णीसहो ॥ बहुलाधिकारा-द्वलोपे क्वचिदन्यस्याच आदेर्दीर्घः । जिह्वा जीहा ॥ 'दीर्घान्न' [ १·४·८७ ] इति प्रतिषेधात् 'शेषादेशस्याह्रोऽचोऽखोः' [ १·४·८६ ] इति सूत्रोक्तं द्वित्वं न भवति ॥ ८ ॥

**हे दक्षिणेऽस्य ॥ ९ ॥**

दिरित्यनुवर्तते । दक्षिणशब्दे अस्य अवर्णस्य दीर्घो भवति हे क्षस्य हकारे सति । दाहिणो ॥ हे इति किम् । दक्खिणो ॥ ९ ॥

**तु समृद्ध्यादौ ॥ १० ॥**

अस्येत्यनुवर्तते । समृद्ध्यादिषु शब्देषु आदेरवर्णस्य दीर्घो भवति तु । सामिद्धी समिद्धी समृद्धिः । पाडिसिद्धी पडिसिद्धी प्रतिसिद्धिः । सारिच्छो सरिच्छो सदृक्षः। माणंसी मणंसी मनस्वी । पासुत्तो पसुत्तो प्रसुप्तः । पाडिप्फद्धी पडिप्फद्धी प्रतिस्पर्धी । पाडिवआ पडिवआ प्रतिपत् । पावासू पवासू प्रवासी । आहिआई अहिआई अभिजातिः । पाअडं पअडं प्रकटम् । पाअअं पअअं प्रकृतम् । पासिद्धी पसिद्धी प्रसिद्धिः । पारकेरं परकेरं पारक्कं परक्कं परकीयम् । चाउरन्तं चउरन्तं चतुरन्तम् । आफंसो अफंसो अस्पर्शः । पावअणं पवअणं प्रवचनम् । पारोहो परोहो प्ररोहः । इत्यादि ॥ १० ॥

---

K adds भोजनं after वीसाणो. B $T_2$ वीसं; $T_1$ वीसी for वीसुं. G om. वलोपे. S पिकस्वरः पिकासरो for विकस्वरः विआसरो. T अन्यस्य च for अन्यस्याचः. 9. G हि for हे in the Sūtra and Com. T दक्षिणे अस्य for दक्षिणेऽस्य in the Sūtra. K हे क्षस्य for the Sūtra. 10. B om. शब्देषु. BT माणसिणी मणंसिणी मनंस्विनी for माणंसी ... मनस्वी. BT पाडिप्पद्धी पडिप्पद्धी, G प्रतिस्पर्द्धिः; $T_2$ पाडिप्पत्थी पडिप्पत्थी for पाडिप्फद्धी पडिप्फद्धी. B T आभिआई अभिआई for आहिआई अहिआई. K S om. पाअडं पअडं प्रकटम्. G om. पाअअं पअअं प्रकृतम्. B om. पारक्कं परक्कं. K reads परकरं twice for परक्कं. B T आपसो अपंसो for आफंसो अफंसो. B T add: प्रसिद्धिसदृक्षमनस्विनीप्रसुप्तप्रवासिचतुरन्ताः । अभिजात्यस्पर्शप्रवचनप्ररोहपरकीयाः । प्रतिपत्प्रकटप्रकृताः सह प्रतिस्पर्धिना समृध्यादिः.

**स्वप्नादाविल् ॥ ११ ॥**

स्वप्नादिषु शब्देष्वादेरवर्णस्य इत्वं भवति । लित्वान्नित्यम् । सिविणो सिमिणो स्वप्नः । विअणं व्यजनम् । विलिअं व्यलीकम् । किविणो कृपणः । मिइङ्गो मृदङ्गः । ईसि ईषत् । वेडिसो वेतसः । दिण्णं दत्तम् । उत्तिमो उत्तमः । मिरिअं मरिचम् ॥ बहुलाधिकाराण्णत्वाभावे दत्ते तु इत्वं न भवति । दत्तं ॥ ११ ॥

**पक्वाङ्गारललाटे तु ॥ १२ ॥**

पक्व अङ्गार ललाट इत्येतेषु आदेरस्य इत्वं भवति तु । पिक्कं पक्कं । इङ्गारो अङ्गारो । णिडालं णडालं ॥ १२ ॥

**सप्तपर्णे फोः ॥ १३ ॥**

सप्तपर्णे फोः द्वितीयस्य इत्वं भवति तु । छत्तिवण्णो छत्तवण्णो ॥ १३ ॥

**मध्यमकतमे च ॥ १४ ॥**

चकारः फोरित्यस्यानुवृत्त्यर्थम् । मध्यमकतमयोर्द्वितीयस्याच इत्वं भवति । पृथग्योगान्नित्यम् । मज्झिमो । कइमो ॥ १४ ॥

**हरे त्वी ॥ १५ ॥**

हरशब्दस्यादेरच ईत्वं भवति तु । हीरो । हरो ॥ १५ ॥

**उल् ध्वनिगवयविष्वचो वः ॥ १६ ॥**

ध्वनिगवयविष्वक्शब्देषु वकारसंबन्धिनः अवर्णस्य उत्वं लिद्भवति । झुणी । गउओ । वीसुं ॥ १६ ॥

---

11. B T विलीअं for विलिअं. G मुइगो; T मइंगो for मिइङ्गो. After मरिचम् G adds इत्यादि. B S T om. दत्ते तु. S om. दत्तं. After दत्तं B T add : वेतसकृपणमृदङ्गोत्तमदत्तेषव्व्यलीकमरिचाश्च । व्यअन ( व्यजन ? ) मिति स्वप्नादिर्भाषाविद्भिः समाख्यातः. 12. G अवर्णस्य; K S अकारस्य for अस्य. $T_2$ पक पिंकं for पिक्कं पक्कं. G K इङ्गालो अङ्गालो for इङ्गारो अङ्गारो. T णीडाळं for णिडाल. 13. $T_1$ सत्तवर्णे in the Sūtra and Com. for सप्तपर्णे. S छत्तिपण्णो छत्तपण्णो for छत्तिवण्णो छत्तवण्णो. 14. G °नुवृत्त्यर्थः, K S °नुकर्षणार्थम् for °नुवृत्त्यर्थम्. T द्वितीयस्यास्य for द्वितीयस्याच G इद्भवति for इत्वं भवति. K S पृथग्योगो नित्यार्थः; T पृथक्प्रयोगान्नित्यम्. 15. $T_1$ त्वि; $T_2$ त्वं for त्वी in the Sūtra. G अवर्णस्य; T अस्य for अच. 16. B T °विष्वचि for °विष्वचो in the Sūtra. B T अस्य for अवर्णस्य. B T ध्रुणी; S झणि for झुणी. B T गउआ; K गवुओ for गउओ.

**ज्ञो णोऽभिज्ञादौ ॥ १७ ॥**

उत्वमनुवर्तते । अभिज्ञादिषु ज्ञकारादेशस्य णस्य संबन्धिनः अवर्णस्य उत्वं भवति । अहिण्णू अभिज्ञः । सव्वण्णू सर्वज्ञः । आगमण्णू आगमज्ञः । कअण्णू कृतज्ञः ॥ ण इति किम् । अहिज्जो अभिज्ञः ॥ अभिज्ञादाविति किम् । पण्णो प्राज्ञः । अहिण्णा अभिज्ञा ॥ येषा ज्ञादेशणकारसंबन्धिनः अस्य उत्वं दृश्यते तेऽभिज्ञादय· ॥ १७ ॥

**स्तावकसास्ने ॥ १८ ॥**

स्तावकसास्नाशब्दयोरादेरस्य उत्वं भवति । थुवओ । सुण्हा ॥ १८ ॥

**चण्डखण्डिते णा वा ॥ १९ ॥**

चण्डखण्डितशब्दयोर्णकारेण सहितस्यादेरवर्णस्य उद्भवति तु । चुडं चण्डं । खुडिओ खण्डिओ ॥ १९ ॥

**प्रथमे प्थोः ॥ २० ॥**

प्रथमशब्दे पकारथकारसंबन्धिनोऽवर्णस्य युगपत्क्रमेण च उत्वं भवति तु । पुढुमं पढुमं पुढमं पढमं ॥ २० ॥

**आर्यायां र्यः श्वश्र्वामूल् ॥ २१ ॥**

श्वश्रूवाचिन्यार्याशब्दे र्यकारसंबन्धिनोऽवर्णस्य ऊत्वं लिद्भवति । अज्जू ॥ श्वश्र्वामिति किम् । अज्जा माता ॥ २१ ॥

---

17. S अस्य for अवर्णस्य. G लिद्भवति for भवति. B K T अभिण्णू for °अहिण्णू. B T आअमण्णू for आगमण्णू. S अभिंजो for अहिज्जो. G om. अभिज्ञादाविति किम् । पण्णो प्राज्ञः । अहिण्णा अभिज्ञा. B T अहिण्णो अभिज्ञः for अहिण्णा अभिज्ञा. T एषां for येषां. 18· G लिद्भवति for भवति. $T_3$ थुवयो for थुवओ. 19. G अस्य for अवर्णस्य. G K उत्वं वा भवति for उद्भवति. B S om. तु. After चण्डं K S add खुडं खंडं. $T_2$ खुडिअं खंडिअ for खुडिओ खण्डिओ. 20. B पथोः for प्थोः in the Sūtra. K पकारथकारयोः; S ष्टोः for °थकारसंबन्धिनोः. B S om. तु. B T पुडुम पडुमं पुडमं पडमं; S पुढुमं पठुमं पुठमं पठमं; K पुडुमं for पुढुमं etc. 21. B S यकार° for र्यकार°. $T_1$ अम्मू; $T_2$ अंजू for अज्जू. B om. माता.

**आसारे तु ॥ २२ ॥**

आसारे आदेरवर्णस्य ऊत्वं भवति तु । ऊसारो आसारो ॥ २२ ॥

**तोऽन्तर्येल् ॥ २३ ॥**

अन्तर् शब्दे तकारसंबन्धिनोऽवर्णस्य एत्वं लिद्भवति । अन्तःपुरम् अन्तेउरं । अन्तश्चारी अन्तेआरी ॥ क्वचिन्न भवति । अन्तर्गतम् अन्तग्गअं । अन्तोवीसम्भणिवेसिआण अन्तर्विश्रम्भनिवेशितानाम् ॥ २३ ॥

**पारावते तु फोः ॥ २४ ॥**

पारावतशब्दे फोर्द्वितीयस्यास्य एत्वं भवति तु । पारेवओ पारावओ ॥ २४ ॥

**उत्करवल्लीद्वारमात्रचः ॥ २५ ॥**

उत्करवल्लीद्वारशब्देषु मात्रच्प्रत्यये आदेरवर्णस्य एत्वं वा भवति । उक्केरो उक्करो । वेल्ली वल्ली । देरं दारं । पक्षे दुआरं ॥ मात्रच्—एत्तिअमेत्तं एत्तिअमत्तं एतावन्मात्रम् ॥ बहुलाधिकारान्मात्रशब्देऽपि । भोअणमेत्तं भोजनमात्रम् ॥ २५ ॥

**शय्यादौ ॥ २६ ॥**

शय्यादिष्वादेरवर्णस्य एत्वं भवति । पृथग्योगान्नित्यम् । सेज्जा शय्या । एत्थ अत्र । गेज्झं ग्राह्यम् । गेन्दुअं कन्दुकम् ॥ २६ ॥

**त्वार्द्रे उदोत् ॥ २७ ॥**

आर्द्रशब्दे आदेरवर्णस्य उत्वमोत्वं च वा भवतः । उल्लं ओल्लं । पक्षे अल्लं अद्दं । बाहसलिलप्पवहेण ओल्लेइ, बाष्पसलिलप्रवाहेणार्द्रयति ॥ २७ ॥

---

22. Before माता G adds संस्कृते. 23. S एत् for एल् in the Sūtra. S om. लित्. K अंतेचारि for अन्तेआरी. After अन्तेआरी B adds अन्तसहम् अन्तेसहं. B अन्तव्वीसम्भ°; Gp अन्तावीसम्भ° for अन्तोवीसम्भ°. 24. K पारावते for पाराबतशब्दे. 25. B °द्वारमात्रचि for °मात्रचः in the Sūtra. T °द्वारशब्दे for °द्वारशब्देषु. G °प्रत्ययेऽपि आदे° for °प्रत्यये चादे°. $T_1$ om. उक्करं. G दुआरं; S वेरं, पक्षे वैरं, वारं दुआरं for वेल्ली... दुआरं. G om. मात्रच्. B S om. एत्तिअमत्तं. G om. बहुलाधिकारात्. 26. After एत्वं $T_1$ adds नित्यं. T गेंडुअं for गेन्दुअं. 27. B S T वार्द्रे for त्वार्द्रे in the Sūtra. S इदोत् for उदोत् in the Sūtra. S इत्वं for उत्वं G भवति for भवतः. G °पवाहेण for °प्पवहेण.

**स्वपि ॥ २८ ॥**

उदोदित्यनुवर्तते । स्वपिधातोरादेरवर्णस्य उदोतौ भवतः । पृथग्योगान्नित्यम् । सुवइ सोवइ ॥ २८ ॥

**ओदाल्यां पङ्क्तौ ॥ २९ ॥**

पङ्क्तौ पङ्क्तिवाचिन्यालीशब्दे आदेरवर्णस्य ओत्वं भवति । ओली ॥ पङ्क्ताविति किम् । आली सखी ॥ २९ ॥

**फोः परस्परनमस्कारे ॥ ३० ॥**

ओदित्यनुवर्तते । परस्परनमस्कारशब्दयोः फोर्द्वितीयस्यास्य ओत्वं भवति । परोप्परं । णमोक्कारो ॥ ३० ॥

**पद्मे मि ॥ ३१ ॥**

पद्मशब्दे आदेरवर्णस्य मकारे परे ओत्वं भवति । पोम्मं ॥ मीति किम् । पदुमं ॥ ३१ ॥

**त्वर्पौ ॥ ३२ ॥**

अर्पौ अर्पयतौ धातावादेरस्य ओद्भवति तु । ओप्पेइ अप्पेइ । ओप्पिअं अप्पिअं ॥ ३२ ॥

**ईल्‌ खल्वाटस्त्यानयोरातः ॥ ३३ ॥**

खल्वाटस्त्यानयोरादेराकारस्य ईत्वं लिद्भवति । खल्लीडो । ठीणं ॥ संखाअमिति तु 'स्त्यः समः खा' [ २·४·१२४ ] इति खादेशे क्तप्रत्ययान्ते सिद्धम् ॥ ३३ ॥

---

28. G. उदोदित वर्तते. 29. T₁ दोळ्यां for ओदाल्यां in the Sūtra. B om. पंक्तौ in Com. 31. T₁ मी for मि in the Sūtra. G ओद्भवति for ओत्वं भवति. G पउमं for पदुमं. 32. B T om. अर्पौ. G: अर्पिधातौ for अर्पयतौ धातौ. Gp ओत्वं for ओद्. 33. T₁ ई for ईल् in the Sūtra. G °स्त्यान आतः for °स्त्यानयोरातः in the Sūtra. B T₁ अवर्णस्य; G आतः for आकारस्य. G om. लित्. After भवति G adds लित्वान्नित्यम्. K ठीणं थीणं; B थीणं for ठीणं. B om. तु after संखाअमिति. After खादेशे K S add कृते. S adds रूपं after क्तप्रत्ययान्ते.

**इत्तु सदादौ ॥ ३४ ॥**

आत इत्यनुवर्तते। सदा इत्यादिष्वादेराकारस्य इत्वं भवति तु। सइ सआ सदा। कुप्पिसो कुप्पासो कूर्पासः। णिसिअरो णिसाअरो निशाकरः। इत्यादि ॥ ३४ ॥

**आचार्ये चो ह्रश्च ॥ ३५ ॥**

आचार्यशब्दे चकारसंबन्धिन आतो ह्रो ह्रस्वो भवति। चकारादित्वं च। आअरिओ आइरिओ ॥ ३५ ॥

**श्यामाके मः ॥ ३६ ॥**

ह्र इत्यनुवर्तते। श्यामाके मकारस्यातो ह्रो ह्रस्वो भवति। सामओ ॥ ३६ ॥

**न वाव्ययोत्खातादौ ॥ ३७ ॥**

अव्ययेषु उत्खातादिषु च आदेरातो ह्रस्वो न वा भवति। अव्यये-जह जहा यथा। तह तहा तथा। अहव अहवा अथवा। व वा। ह हा इत्यादि ॥ उत्खातादिः—उक्खअं उक्खाअं उत्खातम्। कुमरो कुमारो कुमारः। खइरं खाइरं खादिरम्। बलआ बलाआ बलाका। पअअं पाअअं प्राकृतम्। चमरो चामरो चामरः। कलओ कालाओ कलादः स्वर्णकारः। हलिओ हालिओ हालिकः कृषीवलः। णराओ णाराओ नाराचः। तलविण्टं तालविण्टं तालवृन्तम्। ठविओ ठाविओ स्थापितः। पट्ठविओ पट्ठाविओ प्रस्थापितः। संठविओ संठाविओ संस्थापितः। इत्यादि ॥ केचिद् ब्राह्मणपूर्वाह्णयोरपीच्छन्ति। बम्हणो बाम्हणो। पुव्वण्हो पुव्वाण्हो ॥ ३७ ॥

---

34. B T आदित्यनुवर्तते for आत इत्यनुवर्तते. S क्रिप्पिसो for कुप्पिसो. 35. B K T आचार्ये for आचार्यशब्दे. B G om. ह्रो. B $T_{1\cdot 3}$ om. चकारादित्वं च. $T_1$ आकरिओ for आअरिओ. 36. B G T om. ह्रो. 37. B T अव्यये for अव्ययेषु B T उत्खातादौ for उत्खातादिषु. B om. Sk equivalents promiscuously. After तथा G adds सिअ सिआ ‘ स्याद्भव्यचैत्य ’ [ १·४·१०० ] इत्यादिना इत्वम् After तालविंटं G T add तलवेंटं तालवेंटं। तलवोंटं तालवोंटं. $T_2$ तलहटं तालहटं for तलविंटं तालविंटं. After पुव्वाण्हो B T add: उत्खाताव्ययमथवा ह हा यथातथेत्यपि च। प्राकृतकुमारचामरसंस्थापिततालवृन्तनाराचाः। प्रस्थापितसंस्थापितकलादखादिरहालिकबलाकाः। संयोगे ह्रो न स्याद् ब्राह्मणपूर्वाह्णयोर्दीर्घः.

**घञि वा ॥ ३८ ॥**

घञ्निमित्तो यो वृद्धिरूप आकारस्तस्यादिभूतस्य ह्रस्वो वा भवति । पुनर्वाग्रहणादुत्तरत्र न विकल्पः । पवहो पवाहो प्रवाहः । पहरो पहारो प्रहारः । पअरो पआरो प्रकारः प्रचारो वा । पत्थओ पत्थाओ प्रस्तावः ॥ क्वचिन्न भवति । रागः राओ । भागः भाओ ॥ ३८ ॥

**स्वरस्य बिन्द्वमि ॥ ३९ ॥**

बिन्दौ अमि द्वितीयैकवचने च परे स्वरस्य ह्रस्वो भवति । बिन्दौ— मासम् मंसं । मासलम् मंसलं। पांसुः पंसू। कांस्यम् कंसं। वांशिकः वंसिओ । काञ्चनम् कंचणं । लाञ्छनम् लंछणं ॥ अमि—गङ्गं । मालं । नइं । वहुं । वच्छं ॥ ३९ ॥

**संयोगे ॥ ४० ॥**

संयोगे परे पूर्वस्य स्वरस्य ह्रस्वो भवति । आ—आम्रम् अम्बं । ताम्रम् तम्बं । विरहाग्निः विरहग्गी । अमात्यः अमच्चो । काव्यम् कव्वं ॥ ई—मुनीन्द्रः मुणिन्दो । तीर्थम् तित्थं । शीघ्रम् सिग्घं ॥ ऊ—चूर्णम् चुण्णं । सूत्रम् सुत्तं । पूर्वम् पुव्वं ॥ ए—नरेन्द्रः णरिन्दो । म्लेच्छः मिलिच्छो ॥ ऐ—दृष्टैकस्तनपट्टम् दिट्ठेक्कत्थणवट्टं ॥ ओ—अधरोष्ठः अहरुट्ठो । नीलोत्पलम् णीलुप्पलं ॥ एदोतोः क्वचित्स्वरूपेणैव ह्रस्वः । एकः ऍक्को । नेत्रम् णॅत्तं । ग्राह्यम् गॅज्झं । स्तोकम् थोॅक्कं । तुण्डम् तॉण्डं । इत्यादि ॥ ४० ॥

---

38. S घञ्निमित्ते for °निमित्तो. B T पत्थावो for पत्थाओ. 39. B यथा for बिन्दौ. T₁ पस्सू for पसू. T₁ om. नइं वहुं वच्छं; T₃ reads नळं बहुं पेच्छं for नइं...वच्छं. 40. B T अमच्छो for अमच्चो. B T चूर्णः चुण्णो for चूर्णं चुण्णं. B T °थणपट्टं for °थणवट्टं. B T स्वरूपेण ह्रस्वः for स्वरूपेणैव ह्रस्वः. No MS. gives any mark for short ए and ओ. B थोकं for थोॅक्कं.

**त्वेदितः ॥ ४१ ॥**

संयोग इति वर्तते । आदेरिकारस्य संयोगे परे एत्वं तु भवति । पेण्डं पिण्डम् । धम्मेल्लं धम्मिल्लम् । सेन्दूरं सिन्दूरं सिन्दूरम् । बेल्लं बिल्लं बिल्वम् । वेण्हू विण्हू विष्णुः ॥ क्वचिन्न भवति । चिन्ता ॥ ४१ ॥

**मिरायां लित् ॥ ४२ ॥**

इत इत्यनुवर्तते एदिति च । मिराशब्दे इतः एत्वं लिद्भवति । मेरा सीमा ॥ ४२ ॥

**मूषिकविभीतकहरिद्रापथिपृथिवीप्रतिश्रुत्यत् ॥ ४३ ॥**

मूषिकादिष्वादेरिकारस्य अकारादेशो भवति । मूषिकः मूसओ । विभीतकः वहेडओ । हरिद्रा हलद्दी । पथि पहो । अकारान्ते सत्यपि पथशब्दे पथिशब्दस्य रूपान्तरनिवृत्त्यर्थोऽयं योगः । पृथिवी पुहवी पुढवी । प्रतिश्रुत् पडंसुआ प्रतिध्वनिः ॥ ४३ ॥

**रस्तित्तिरौ ॥ ४४ ॥**

अदित्यनुवर्तते । तित्तिरिशब्दे रसंबन्धिन इकारस्य अत्वं भवति । तित्तिरो ॥ ४४ ॥

**इतौ तो वाक्यादौ ॥ ४५ ॥**

वाक्यादिभूते इतिशब्दे तकारसंबन्धिन इतः अद्भवति । इअ विअसिअ-कुसुमसरो, इति विकसितकुसुमशरः ॥ वाक्यादाविति किम् । पिओ त्ति ॥ ॥ ४५ ॥

---

41. BT वेण्णू विण्णू for वेण्हू विण्हू 42. B T सीमेति यावत् for सीमा. 43. B T अकार for अकारादेशो. S पथिशब्दनिवृत्त्यर्थो for पथिशब्दस्य रूपान्तरनिवृत्त्यर्थो. B °निवृत्त्यर्थम् for °निवृत्त्यर्थो. G पडसुआ for पडंसुआ. After प्रतिध्वनिः K adds इत्यर्थः. 44. T रेफसंबन्धिनः for रसंबन्धिनः. G स्यात् for भवति. 45. G S इतो तौ for इतौ तो in the Sūtra. B T विअसिअकुमुअसरो for °कुसुमसरो. B T विकसितकुमुदसरः for °कुसुमशरः.

**चेङ्गुदशिथिलयोः ॥ ४६ ॥**

इङ्गुदशिथिलयोरादेरित अत्वं वा भवति । अंगुअं इंगुअं । सढिलं सिढिलं । पसढिलं पसिढिलं ॥ णिम्माअं णिम्मिअं इत्येतौ निर्मातृ-निर्मिताभ्या भविष्यतः ॥ ४६ ॥

**उ युधिष्ठिरे ॥ ४७ ॥**

वेत्यनुवृत्तिः । युधिष्ठिरे आदेरित उत्वं वा भवति । जुहुट्ठिलो जुहिट्ठिलो ॥ ४७ ॥

**द्विनीक्षुप्रवासिषु ॥ ४८ ॥**

उत्वमित्यनुवर्तते । द्विशब्दे नीत्युपसर्गे इक्षुप्रवासिशब्दयोश्च आदेरित उत्वं भवति । पृथग्योगान्न विकल्पः ॥ द्विमात्रः दुमत्तो । द्विजातिः दुआई । द्विविधः दुविहो । द्विरेफः दुरेहो । द्विवचनम् दुवअणं । दुहा वि सो सुरवहू-सत्थो, द्विधापि स सुरवधूसार्थः॥ बहुलाधिकारात्कचिद्विकल्पः । दुउणो विउणो द्विगुणः। दुइओ विइओ द्वितीयः॥ क्वचिन्न भवति । द्विजः दिओ । द्विरदः दिरओ । द्विधागतः। दिहागओ ॥ क्वचिदोत्वमपि । द्विवचनम् दोवअणं ॥ नि—णुमज्जइ । निमज्जइ । णुमन्तो निमन्त्रः ॥ क्वचिन्न भवति । निपतति णिवडइ ॥ इक्षुः उच्छू । प्रवासी पवासू ॥ ४८ ॥

---

46. T वेंगुदि° in the Sūtra and Com. $T_1$ अकारत्वं for अत्वं. B णिम्मअं for णिम्मिअं. G T निर्मात° for निर्मातृ°. 47. $KT_1$ उत् for उ in the Sūtra. B K T om. वेत्यनुवृत्तिः. B K जहुट्ठिला जहिट्ठिलो; $T_2$ जुहुट्ठिरो जहट्ठिरो for जुहुट्ठिलो जुहिट्ठिलो. 48. B उत्वमनुवर्तते; T उ इत्यनुवर्तते. B T पृथग्योगान्नित्यम् for °योगान्न विकल्प°. B T द्विधाविधः दुहाविओ; K द्विधामतः विहामओ for द्विविधः दुविहो After दुउणो B T add दिउणो. T om. दुहा वि...सार्थः. G द्विधागति· दिहागई for द्विधागतः दिहागओ. B om. णुमन्तो निमन्त्रः; G notes a p णुमन्तो BT add इच्छू after इक्षुः. After पवासू B adds पावासू.

**तु निर्झरद्विधाकृञोरोन्ना ॥ ४९ ॥**

निर्झरशब्दे द्विधाकृञ्शब्दे च आदेरितो नकारेण सह ओत्वं तु भवति। ओज्झरो णिज्झरो निर्झरः । दोहाकिज्जइ दुहाकिज्जइ द्विधाक्रियते । दोहाइअं दुहाइअं द्विधाकृतम् ॥ कृञिति किम् । दिहागअं द्विधागतम् ॥ ४९ ॥

**ईतः काश्मीरहरीतक्योर्लालौ ॥ ५० ॥**

काश्मीरहरीतकीशब्दयोरीकारस्य आ अ इत्येतौ लितौ यथासंख्येन भवतः । कम्हारो । हरडई ॥ ५० ॥

**गभीरग इत् ॥ ५१ ॥**

ईत इत्यनुवर्तते । गभीरादिष्वादेरीकारस्य इत्वं भवति । गहिरो गभीरः । सिरिसो शिरीषः । आणिअं आनीतम् ॥ क्वियामीकारोऽपि दृश्यते ॥ आणीदा भुअणब्भुएक्कजणणी [कर्पूर० १·२५], आनीता भुवनाद्भुतैकजननी॥ गहिअं गृहीतम् । विलिअ व्रीडितम् । विइओ द्वितीयः । पईविअं प्रदीपितम् । तइओ तृतीयः। जिअओ जीवन् । ओसिअन्तो अवसीदन् । पसिअ प्रसीद। वम्मिओ वल्मीकः इत्यादि ॥ तआणिं इति तु तदानींशब्दस्य 'स्वरस्य बिन्दुमि' [ १·२·३९ ] इति ह्रस्वे सिद्धम् ॥ ५१ ॥

**वा पानीयगे ॥ ५२ ॥**

पानीयादिष्वादेरीकारस्य इत्वं वा भवति । पाणिअं पाणीअं पानीयम् । अलिअं अलीअं अलीकम् । करिसं करीसं करीषम् । उवणिअं उवणीअं उपनीतम् । जिअइ जीअइ जीवतीत्यादि ॥ ५२ ॥

---

49. Gp त्वीर्निर्झर°; T त्वो निर्झर° in the Sūtra. S °द्विधाकृञो in the Sūtra. B दोहाकिअं दुहाकिअ द्विधाकृतम् for दोहाइअं दुहाइअ. K om. दुहाइअं. S कृङिति for कृञिति. G om. द्विधागतम्. 50. B T यथासंख्यं for यथासख्येन. B कंहारो; $T_2$ कोम्हारो for कम्हारो. 51. G इतः for ईतः in the Sūtra. $T_{1\cdot2}$ आणीअं for आणिअं. After व्रीडितम् G adds किलिअं क्रीडितम्. B $T_1$ पडिवअ; $T_3$ पडिविअं for पईविअं. G जिअउ जीवतु; K जीअंतो for जिअओ जीवन्. $T_1$ पसीअ for पसिअ. 52. B T स्यात् for भवति. B पाणियं पाणीय for पाणिअं पाणीअं $T_1$ कारीसं for करीसं. $T_1$ om. उवणिअं.

**उलृ जीर्णे ॥ ५३ ॥**

जीर्णशब्दे ईत ऊत्वं भवति । लित्वान्न विकल्पः । जुण्णं ॥ क्वचिन्न । जिण्णे भोअणमत्ते, जीर्णे भोजनमात्रे ॥ ५३ ॥

**तीर्थे ह्यूलृ ॥ ५४ ॥**

तीर्थे ईत ऊत्वं भवति हि हकारे सति । तूहं ॥ हीति किम् । तित्थं ॥ ५४ ॥

**विहीनहीने वा ॥ ५५ ॥**

विहीनहीनयोरीत ऊत्वं वा भवति । विहूणं विहीणं । हूणं हीणं ॥ अनयोरिति किम् । पहीणजरमरणा ॥ ५५ ॥

**एलृ पीठनीडकीदृशपीयूषविभीतकेदृशापीडे ॥ ५६ ॥**

पीठादिष्वादेरीत एत्वं भवति । लित्वान्न विकल्पः । पेढं । नेडं । केरिसो । पेऊसं । वहेडओ । एरिसो । आमेलो ॥ बहुलाधिकाराच्च पीठनीड-योर्विकल्पः । पीढं । नीडं ॥ ५६ ॥

**त्वदुत उपरिगुरुके ॥ ५७ ॥**

उपरिगुरुकयोरादेरुकारस्य अत्वं तु भवति । अवरि उवरि । गरुओ गुरुओ ॥ कप्रत्ययपरिग्रहाद्गुरौ न भवति । गुरू ॥ ५७ ॥

---

53. B T लित्वान्नित्यम् for लित्वान्न विकल्पः. After क्वचिन्न G adds भवति; T adds स्यात्. $T_1$ om. जिण्णे ... मात्रे 54. G ह्यूत् for ह्यूलृ. Gp तीर्थशब्दे for तीर्थे. T उत्व for ऊत्वं. G om. भवति. T तुहं for तूहं. 55 BT तु for वा. $T_1$ om. विहीनं and हीनम्. S वहिण॰ for पहीण॰. S ॰मलणो for ॰मरणा 56. T adds लित् after एत्वं. B लित्वान्नित्यम्; T om. लित्वान्न विकल्पः. $T_1$ पेढं; $T_2$ पेडं for पेढं. G नेड्डं for नेडं. S आपेलो for आमेलो. 57. B अद्भवति तु; $T_2$ अत्वं भवति तु. $T_1$ om. तु. G om. गुरू.

**मुकुलादौ ॥ ५८ ॥**

उत इत्यनुवर्तते, अदिति च । मुकुलादिष्वादेरुकारस्य अद्भवति । पृथ-ग्योगान्न विकल्पः ॥ मउलं मुकुलम् । मउडं मुकुटम् ॥ मकुटं यद्यपि संस्कृते तथाप्ययं योगो मुकुटशब्दस्य रूपान्तरनिवृत्त्यर्थः ॥ मउरं मुकुरम् । अगरू अगुरुः । गलोई गुडूची । गरुई गुर्वी । जहुट्ठिलो युधिष्ठिरः । सोअमल्लं सौकुमार्यम् । इत्यादि ॥ बहुलाधिकारात्क्वचिदात्वमपि भवति । विद्रुतः विद्दाओ ॥५८॥

**रो भ्रुकुटिपुरुषयोरित् ॥ ५९ ॥**

अनयो रेफसंबन्धिन उकारस्य इत्वं भवति । भिउडी । पुरिसो । पउरिसं पौरुषम् ॥ ५९ ॥

**क्षुत ईत् ॥ ६० ॥**

क्षुत उत ईत्वं भवति । छीअं ॥ ६० ॥

**दोदोऽनुत्साहोत्सन्न ऊच्छासि ॥ ६१ ॥**

उदित्युपसर्गस्य उतः शकारसकारयोः परयोर्दा दकारेण सह ऊत्वं भवति उत्साहोत्सन्नशब्दौ वर्जयित्वा । उच्छ्वासः ऊसासो । उच्छ्वसिति ऊससइ । उद्गताः शुका यस्मिन्स उच्छुकः ऊसुओ । उत्सुकः ऊसुओ । उत्सवः ऊसओ । उत्सरति ऊसरइ । उत्सिक्तः ऊसित्तो ॥ अनुत्साहोत्सन्न इति किम् । उच्छाहो । उच्छण्णो ॥ ६१ ॥

---

58. B om. मकुटम्. B मुकुर॰ for मुकुरम्. B गुलूची. T गुरुई for गुर्वी. B $T_1$ om. अपि. B विदाओ for विद्दाओ. 59. $T_1$ रुत् भ्रुकुटिपुरुषयोः; $T_{2.3}$ र इत् भ्रुकुटिपुरुषयोः for the Sūtra. B भ्रुकुटी॰ in the Sūtra. B T भ्रुकुटीपुरुषयोः for अनयोः. $T_1$ पुरीसो for पुरिसो. 60. S क्षुभ for क्षुत in the Sūtra. B इत् for ईत् in the Sūtra. After छीअं B T add पक्षे छुअं. 61. K तो तो in the Sūtra before correction. T दो तो in the Sūtra. T उतः उदित्युप॰. B om. उतः. K परयोस्तकारेण before correction. B T om. दा. G om. उद्गुकः ऊसुओ; K ऊसुवो for ऊसुओ. After उच्छण्णो Gp adds शसीति किम्। वुग्गओ उग्गओ.

**दुरो रलुकि तु ॥ ६२ ॥**

ऊदित्यनुवर्तते। दुर् इत्युपसर्गस्य रलुकि रेफलोपे सति आदेरुत ऊद्वा भवति। दूसहो दुसहो दुःसहः। दूहओ दुहओ दुर्भगः॥ रलुकीति किम्। दुस्सहो विरहो॥ ६२॥

**सुभगमुसलयोः ॥ ६३ ॥**

ऊदित्यनुवर्तते। सुभगमुसलयोरुत ऊद्वा भवति। सूहओ सुहओ सुभगः। मूसलं मुसलं मुसलम्॥ ६३॥

**हश्चौत्कुतूहले ॥ ६४ ॥**

कुतूहले आदेरुत ओत्वं भवति ह्रश्च तत्संनियोगेन ऊतो ह्रस्वश्च। कोउहलं कुऊहलं कोउहल्लं कुतूहलम्॥ ६४॥

**स्तौ ॥ ६५ ॥**

ओदिति वर्तते। स्तौ संयुक्ते परे आदेरुत ओत्वं भवति। तुण्डम् तोण्डं। पुष्करम् पोक्खरं। कुट्टिमम् कोट्टिमं। पुस्तकम् पोत्थअं। मुस्ता मोत्था। मुद्गरः मोग्गरो। पुद्गलः पोग्गलो। कुन्दम् कोन्दं। व्युत्क्रान्तम् वोक्कन्तं॥ ६५॥

**सूक्ष्मेऽद्वोतः ॥ ६६ ॥**

सूक्ष्मशब्दे ऊत अत्वं वा भवति। सण्हं सुण्हं॥ ६६॥

**अल् दुकूले ॥ ६७ ॥**

ऊत इत्यनुवर्तते। दुकूले ऊत अल् इत्यादेशो भवति। लकारो नानुबन्धः। दुअल्लं दुऊलं॥ ६७॥

---

62. T om. ऊदित्यनुवर्तते. B T om. दुःसहः. B T om. दूहओ दुहओ दुर्भगः. B T om. विरहो. 63. B K S T °मुसले for °मुसलयोः in the Sūtra. K त्वित्यनुवर्तते for ऊदित्यनु°. G उद्भवति तु for ऊद्वा भवति. $T_2$ सूहवो for सूहओ. B T om. सुभगः. B T om. मुसलम्. 64. $T_1$ हश्चोत् for हश्चौत् in the Sūtra. K कुतूहलशब्दे for कुतूहले. K कोदूहलं कुदूहलं; S कोदूहलं. B om. कोउहल्लं; K कुऊहल्लं; S कोदुहल्लं for कोउहल्लं. 65. B. T ओदित्यनुवर्तते for ओदिति वर्तते. After तोण्डं G K add मुण्डं मोण्डं. S पोत्थओ for पोत्थअं. B T मुक्तगरः मोत्तअरो for मुद्गरः मोग्गरो. B T पुद्गरः for पुद्गलः. K S कुन्तं कोन्तं for कुन्दं कोन्दं. 67. G वोत for ऊत.

**ईदुद्व्यूढे ॥ ६८ ॥**

उद्व्यूढे ऊत ईत्वं वा भवति । उव्वीढं उव्वूढं ॥ ६८ ॥

**उल् कण्डूयहनूमद्वातूले ॥ ६९ ॥**

कण्डूयतौ धातौ हनूमद्वातूलयोश्च आदेरूत उत्वं लिद्भवति । कण्डुअइ । हणुमन्तो । वाउलो ॥ ६९ ॥

**वा मधूके ॥ ७० ॥**

मधूके ऊत उत्वं वा भवति । महुअं महूअं ॥ ७० ॥

**इदेन्नूपुरे ॥ ७१ ॥**

वेत्यनुवर्तते । नूपुरे ऊन इदेतौ वा भवतः । णिउरं णेउरं णूउर ॥७१॥

**ओल् स्थूणातूणमूल्यतूणीरकूर्परगुडूचीकूष्माण्डीताम्बूलीषु ॥७२॥**

एषु ऊत ओत्वं लिद्भवति । थोणा । तोणं । मोल्लं । तोणीरं । कोप्परं । गलोई । कोहण्डी । तम्बोली ॥ बहुलाधिकारात्स्थूणातूणयोर्विकल्प । थूणा । तूणं ॥ ७२ ॥

**ऋतोऽत् ॥ ७३ ॥**

आदेः ऋकारस्य अत्वं भवति । घृतं घअं । तृणं तणं । कृतं कअं । वृषभः वसहो । मृगः मओ ॥ ७३ ॥

**आद्वा मृदुत्वमृदुककृशासु ॥ ७४ ॥**

ऋत इत्यनुवर्तते । एषु आदेः ऋकारस्य आत्वं वा भवति । माउत्तं मउत्तं । माउअं मउअं । कासा कसा ॥ ७४ ॥

---

68. $T_1$ ईंदूद्वृढे for the Sūtra. 69. B कण्डूयति° for कण्डूय° in the Sūtra. 72. Gp splits this Sūtra into two and so reads as follows:- ओत् स्थूणातूणे । अनयोरूत ओत्वं वा भवति । थोणा थूणा । तोणं तूणं ॥ कूर्परमूल्यकूष्माण्डताम्बूलगुडूचीतूणीरे ॥ एषु ऊत ओद्भवति । पृथग्योगान्न विकल्पः । कोप्परं । मोल्लं । कोहंडी । तम्बोलं । गलोई । तोणीरं. K कोहण्डी कोहली; $T_1$ कोम्हडी; $T_2$ क ण्डी for कोहण्डी. 74. K मृदुतादिषु; $T_1$ मृद्वादिषु, $T_2$ मृदुत्वादिषु for एषु. G $T_2$ माउत्तणं मउत्तणं for माउत्तं मउत्तं. K माउक्कं मउक्कं मृदुकम्; S माउकं मउकं. S काशा कशा for कासा कसा.

**इत् कृपगे ॥ ७५ ॥**

कृप इत्यादिषु शब्देषु आदेः ऋत इत्वं भवति। लित्वान्न विकल्पः। किवो कृपः। णिवो नृपः। किवा कृपा। किवणो कृपणः। किवाणो कृपाणः। किसो कृशः। किसाणू कृशानुः। किई कृतिः। विसो वृषः। मूसिओ मूषिकः। किसरो कृसरः विलेपविशेषः। किच्छं कृच्छ्रम्। किसओ कृषकः। तिसिओ तृषितः। इसी ऋषिः। धिई धृतिः। विंछिओ विञ्छुओ वृश्चिकः। वित्तं वृत्तम्। वित्ती वृत्तिः। पिच्छी पृथ्वी। किच्चा कृत्या। घुसिणं घुसृणम्। घिणा घृणा। इड्ढी ऋद्धिः। समिद्धी समृद्धिः। गिद्धी गृद्धिः। विद्धकई वृद्धकपि। छिहा स्पृहा। बिसी बृसी। हिअअं हृदयम्। उक्किट्ठं उत्कृष्टम्। मिट्ठं मृष्टं रस एव, अन्यत्र मट्ठं। दिट्ठं दृष्टम्। विइण्हो वितृष्णः। सइ सकृत्। दिट्ठी दृष्टिः। गिट्ठी गृष्टिः। सिट्ठी सृष्टिः। सिआलो शृगालः। वाहित्तं व्याहृतम्। बिंहिअं बृंहितम्। तिप्पं तृप्रम्। सिट्ठं सृष्टम्। सिङ्गारो शृङ्गारः। भिङ्गो भृङ्गः। मिओ मृगः। भिऊ भृगुः। भिङ्गारो भृङ्गारः इत्यादि ॥ ७५ ॥

**शृङ्गमृगाङ्कमृत्युधृष्टमसृणेषु वा ॥ ७६ ॥**

शृङ्गादिषु ऋत इत्वं वा भवति। सिङ्गं सङ्गं। मिअङ्को मअङ्को। मिच्चू मच्चू। धिट्ठो धट्ठो। मसिणं मसणं ॥ ७६ ॥

**पृष्ठेऽनुत्तरपदे ॥ ७७ ॥**

पृष्ठशब्दे अनुत्तरपदे ऋत इत्वं वा भवति। पिट्ठं पट्ठं ॥ अनुत्तरपद इति किम्। महिवट्ठं महीपृष्ठम् ॥ ७७ ॥

---

75. B T om. आदेः. B T लित्वान्नित्यम् for लित्वान्न विकल्पः. B T om. विसो वृषः. T gives Sk. equivalents at the end. Gp किसरा कृशरा. B T om, विलेपविशेषः. G किसिओ कृषिकः for किसओ कृषकः. G om. तिसिओ तृषितः. B विञ्छिओ for विञ्छिओ. B पिही for पिच्छी. B किच्छा for किच्चा. G adds दुर्गा after कृत्या. B गिट्ठी for गिद्धी; G गिट्ठी गृष्टिः for गिद्धी. B K T वृद्धकविः for °कपिः. B पिहा for छिहा. After दृष्टम् G adds हिअं हृतम्. B तृप्तम्. for तृप्रम्. After तृप्रम् G adds दुःखं मोघ अधर्मः पापं काष्ठं आज्यं वा. G om. मिओ मृगः. 76. B T स्यात् for भवति. 77. G पिट्ठी पिट्ठिपरिट्ठविअ; S पिट्ठं पट्ठि; T पिट्ठी पट्ठं. B T महिपट्ठ for महिवट्ठ.

**उद् वृषभे वुः ॥ ७८ ॥**

वृषभे वृ इत्येतस्य उत्वं वा भवति । उसहो वसहो ॥ ७८ ॥

**वृन्दारकनिवृत्तयोः ॥ ७९ ॥**

उदित्यनुवर्तते । अनयोः ऋत उद्वा भवति । वुन्दारओ वन्दारओ । णिउत्तं णिअत्तं ॥ ७९ ॥

**ऋतुगे ॥ ८० ॥**

ऋत्वादिषु शब्देषु आदेः ऋत उत्व भवति । पृथग्योगान्नित्यम् । उऊ ऋतुः । उसहो ऋषभः । पाहुडं प्राभृतम् । पहुडि प्रभृति । भुई भृतिः । णिहुअं निभृतम् । परहुअं परभृतम् । विउअ विवृतम् । संवुअं संवृतम् । णिउअं निर्वृतम् । णिव्वुई निर्वृतिः । णिउत्ती निवृत्तिः । पउत्ती प्रवृत्तिः । पाउसो प्रावृट् । वुत्तन्तो वृत्तान्तः । वुन्दं वृन्दम् । वुन्दावणं वृन्दावनम् । पुहई पृथिवी । वुड्ढो वृद्धः । उज्जू ऋजुः । मुणालं मृणालम् । पुट्ठो पृष्टः । पउट्ठो प्रवृष्टः । वुट्ठी वृष्टिः । परामुट्ठो परामृष्टः । भाउओ भ्रातृकः । पिउओ पितृकः । जामाउओ जामातृकः । माउआ मातृका । इत्यादि ॥ ८० ॥

**गौणान्त्यस्य ॥ ८१ ॥**

गौणपदस्य योऽन्त्य ऋत् तस्य उद्भवति । माउमण्डलं मातृमण्डलम् । माउहरं मातृगृहम् । पिउहरं पितृगृहम् । माउसिआ माउच्छा मातृष्वसा । पिउसिआ पिउच्छा पितृष्वसा । पिउवणं पितृवनम् । पिउवई पितृपतिः ॥ ८१ ॥

---

78. S इत्यस्यावयवस्य for इत्येतस्य. B T स्यात् for भवति. 79. B S T om. वा. K निवृत्तं निवत्तं for णिउत्त णिअत्त. 80. K उद् ऋतः for ऋतुगे for the Sūtra. S हुई हृतिः for भुई भृतिः. T परीहुअं for परहुअ. B om. विउअं विवृतम्. T निउअं निंवृतम् for विउअं विवृतम्. B om. णिउअं निर्वृतम्. णिव्वुई निर्वृतिः. G पुहवी for पुहई. G om. वुड्ढो वृद्धः. T उजू for उज्जू. After ऋजुः B adds तैलादित्वाद् द्वित्वम्. B T स्पृष्टः for पृष्टः. B T वुट्ठी वृष्टिः for वुड्ढी वृद्धिः. $T_1$ भ्रातृक for भ्रातृकः. After मातृका B adds पाउडं प्राकृतम् । प्रत्यादित्वात्तस्य डः. 81. B T गौणस्य उपसर्जनस्य; K गौणशब्दस्य उपसर्जनपदस्य अमुख्यस्य; S गौणशब्दस्य for गौणपदस्य B T ऋकारः for ऋत्. B om. Sk. equivalents. $T_1$ माउमण्डणं for °मण्डल. $T_1$ om. from पिउहर down to पितृपतिः. $BT_{1,3}$ माउघरं; $T_2$ माइघरं for माउहरं. BT om. पिउहरं.

**इदुन्मातुः ॥ ८२ ॥**

गौणस्य मातृशब्दस्य ऋत इदुतौ भवतः । माइहरं माउहरं मातृगृहम् ॥ क्वचिदगौणस्यापि । माईणं माऊणं मातॄणाम् ॥ ८२ ॥

**वृष्टिपृथङ्मृदङ्गनप्तृकवृष्टे ॥ ८३ ॥**

इदुदित्यनुवर्तते । वृष्ट्यादिषु ऋत इदुतौ भवतः । विट्ठी वुट्ठी वृष्टिः । पिहं पुहं पृथक् । मिअङ्गो मुअङ्गो मृदङ्गः । णत्तिओ णत्तुओ नप्तृकः । विट्ठी वुट्ठी वृष्टिः ॥ ८३ ॥

**तु बृहस्पतौ ॥ ८४ ॥**

बृहस्पतौ ऋत इदुतौ तु भवतः । बिहप्फई बुहप्फई बहप्फई ॥८४॥

**उदूदोल् मृषि ॥ ८५ ॥**

मृषाशब्दे ऋत उत्वं ओत्वं ईत्वं च भवति । ल्त्वान्न विकल्पः । मुसा मूसा मोसा । मुसावाओ मूसावाओ मोसावाओ मृषावादः ॥ ८५ ॥

**वृन्त इदेङ् ॥ ८६ ॥**

वृन्ते ऋत इदेङ् वा भवति । ए ओ एङ्, इच्च एङ् च इदेङ् । इत्वमेत्वमोत्वमित्यर्थः । विण्टं वेण्टं वोण्ट ॥ ८६ ॥

**ढिरादृते ॥ ८७ ॥**

आदृते ऋतो ढिरादेशो भवति । आढिओ ॥ ८७ ॥

---

82. $T_1$ उदुन्मातुः for इदुन्मातुः in the Sūtra. $T_1$ मातृकाशब्दस्य for मातृशब्दस्य. B माइघरं माउघरं for माइहर माउहरं. BT om. मातृगृहम्. $BT_1$ om. माऊण. After मातॄणाम् Gp adds माइआ माउआ मातृका. 83. B वुड्ढी; S उट्ठी for वुट्ठी. $T_1$ पीह for पिहं. G $T_1$ मिइङ्गो मुइङ्गो. S उट्ठो for वुट्ठो. 84. B T om. बृहस्पतौ in Com. $T_1$ वीहप्पई उहप्पई for बिहप्फई बुहप्फई. 85. G भवन्ति for भवति. B T om. मूसावाओ मोसावाओ. 86. G इदेङौ वा भवतः for इदेङ् वा भवति. S om. एओ एङ्, इच्च एच्च इदेङ्. G इदेङौ for इदेङ्. $T_1$ विंदं वेंदं वोंदं for विण्टं etc. 87. $T_1$ डीरादृते; $T_{2\cdot3}$ डिरादृते for the Sūtra. T डीरादेशो for ढिरादेशो. $T_1$ आडीओ; $T_2$ आडिओ; for आढिओ.

**दृप्तेऽरि प्ता ॥ ८८ ॥**

दृप्ते ऋतः पकारतकाराभ्यां सह अरि इत्यादेशो भवति । दरिओ । दरिअसीहेण ॥ ८८ ॥

**केवलस्य रिः ॥ ८९ ॥**

ऋतः केवलस्य व्यञ्जनेनासंपृक्तस्य रि इत्यादेशो भवति । रिद्धी ऋद्धिः । रिच्छो ऋक्षः ॥ ८९ ॥

**दृश्यक्सक्विपि ॥ ९० ॥**

अक् क्स क्विप् इत्येतदन्ते दृशिधातौ ऋतो रित्वं भवति । अक्-सरिसो सदृशः ॥ क्स—सरिच्छो सदृक्षः । क्विप्—सरी सदृक् । सरिवण्णो सरिरूवो ॥ एवं एआरिसो । भवारिसो । जारिसो । तारिसो । केरिसो । एरिसो । तुम्हारिसो ॥ अक्सयोः साहचर्यात् त्यदादिविहितः क्विप् इह परिगृह्यते ॥९०॥

**ऋत्वृजुऋणऋषिऋषभे वा ॥९१ ॥**

एषु ऋतो रित्वं वा भवति । रिऊ उऊ । रिज्जू उज्जू । रिणं अणं । रिसी इसी । रिसहो उसहो ॥ ९१ ॥

**क्लृप्त इलिः ॥ ९२ ॥**

क्लृप्त इत्यत्र आदेरच इलि इत्यादेशो भवति । किलित्तं । किलित्तकुसुमोवआरेसु, क्लृप्तकुसुमोपचारेषु ॥ ९२ ॥

---

88. $T_1$ दृप्तेरि पता for the Sūtra. $T_{1\cdot2}$ दरीओ for दरिओ. $T_2$ अवसतेण, $T_3$ दरिअवसंतेण for दरिअसीहेण. 89. $T_1$ रीः for रिः in the Sūtra. T री for रि. B $T_1$ om. रिद्धी रिद्धिः. $T_1$ रीच्छो for रिच्छो. 90. Bp. दृशि टक् सक् क्विपि for the Sūtra. B °क्विपि, T °सकपि in the Sūtra. $T_1$ टक् for अक्. $T_1$ सक्. for क्स. B $T_2$ क्विन् for क्विप्. G om. सरी सदृक्. B T सक्विनोः साहचर्यात् त्यदादौत्यादिसूत्रविहितः कन् ( $T_1$ कप्, $T_2$ क्विन् ) इह परिगृह्यते. 91. B T स्यात् for भवति. B T रिजू उजू for रिज्जू उज्जू. BT उणं for अणं. BT उसी for इसी. 92. B T om. किलित्तकुसुमोवआरेसु down to °पचारेषु. K °वहारेसु...°पहारेसु for किलित्त...वआरेसु...पचारेषु.

**चपेटाकेसरदेवरसैन्यवेदनास्वेचस्त्विवत् ॥ ९३ ॥**

एषु एचः संध्यक्षराणामित्वं भवति तु । चविडा चवेडा चपेटा । किसरं केसरं केसरम् । दिअरो देअरो देवरः । सिन्नं सेन्नं ॥ दैत्यादित्वात् [ १·२·१०३ ] सइन्नं सैन्यम् । विअणा वेअणा वेदना ॥ महिला महेला इत्येतौ तत्समावेव ॥ ९३ ॥

**सैन्धवशनैश्चरे ॥ ९४ ॥**

एच इत्यनुवर्तते । सैन्धवशनैश्चरयोरादेरेच इत्वं भवति । पृथग्योगान्नित्यम् । सिन्धवं । सणिच्छरो ॥ ९४ ॥

**त्वत्सरोरुहमनोहरप्रकोष्ठातोद्यान्योन्ये वश्च क्तोः ॥ ९५ ॥**

एषु एचः अत्वं तु भवति, तत्संनियोगे यथासंभवं ककारतकारयोश्च वकारादेशः । सररुहं सरोरुहं । मणहरं मणोहरं । पवट्ठो पओट्ठो । आवज्जं आओज्जं । अण्णण्णं अण्णोण्णं ॥ सिरवेअणा सिरोवेअणा इत्येतौ शिरोवेदनायाः साध्यमानसिद्धावस्थयोरेव भवतः ॥ ९५ ॥

**कौक्षेयक उत् ॥ ९६ ॥**

कौक्षेयक आदेरेच उत्वं भवति तु । कुच्छेअअं कोच्छेअअं ॥ ९६ ॥

**शौण्डगेषु ॥ ९७ ॥**

शौण्डादिष्वादेरेच उत्वं भवति । योगविभागान्न विकल्पः । सुण्डो शौण्डः । सुद्धोअणी शौद्धोदनिः । मुञ्जाअणो मौञ्जायनः । सुन्देरं सुन्दरिअं सौन्दर्यम् । सुगन्धत्तणं सौगन्ध्यम् । दुवारिओ दौवारिकः । सुवण्णिओ सौवर्णिकः । पुलोमी पौलोमी ॥ इत्यादि ॥ ९७ ॥

---

93. S °केशर° in the Sūtra. 94. K S इद्भवति for इत्व भवति. B T सणिच्चरो for सणिच्छरो. 95. B T भवति तु for तु भवति. B तत्संनियोगेन for °संनियोगे. B T कतकारयोश्च for ककारतकारयोश्च. After वकारादेश· B T add भवति. K gives Sk equivalents of all Pr. words in Com. 96. K कौक्षेयकस्य for कौक्षेयक. 97. B $T_{1\cdot3}$ सुंडोअणी शौण्डोदनिः for सुद्धोअणी शौद्धोदनिः. B T om. सुन्दरिअं.

**गव्यउदाईत् ॥ ९८ ॥**

गोशब्दे एचः अउ आई इत्येतौ भवतः । गउओ हरस्स । एसा *गाई ॥ ९८ ॥

**ऊः स्तेने वा ॥ ९९ ॥**

स्तेने संध्यक्षरस्य ऊत्वं वा भवति । थूणो थेणो ॥ ९९ ॥

**सोच्छ्वासे ॥ १०० ॥**

सोच्छ्वासशब्दे एच ऊ भवति । पृथग्योगान्न विकल्प. । सूसासो ॥ ॥ १०० ॥

**ऐच एङ् ॥ १०१ ॥**

ऐचः ऐकारौकारयोः एङ् एकारौकारौ यथासंख्यं भवतः । ऐ-शैलः सेलो । त्रैलोक्यं तेल्लोक्कं । ऐरावणः एरावणो । कैलासः केलासो । वैद्यः वेज्जो । कैटभ केढवो । वैधव्यं वेहव्वं ॥ औ--कौमुदी कोमुई । यौवनं जोव्वणं । कौस्तुभः कोत्थुहो । कौशाम्बी कोसम्बी । क्रौञ्चः कोञ्चो । कौशिकः कोसिओ ॥ १०१ ॥

**अइ तु वैरादौ ॥ १०२ ॥**

ऐच इत्यनुवर्तते । वैरादिष्वादेरैच अइ इत्यादेशो भवति तु । वैरम् वइरं वेरं । वैशंपायनः वइसंपाअणो वेसंपाअणो । वेशिकम् वइसिअं वेसिअं । वैश्रवणः वइसवणो वेसवणो । चैत्रः चइत्तो चेत्तो । कैलासः कइलासो केलासो । वैतालिकः वइआलिओ वेआलिओ । कैरवम् कइरवं केरवं । दैवम् दइवं देवं । इत्यादि ॥ १०२ ॥

---

100. G K ऊद्भवति for ऊ भवति B T पृथग्योगान्नित्यम् for °योगान्न विकल्पः. 101. S एच in the Sūtra and Com. for एङ्. B कइलासो for केलासो. K केडवो for केढवो. G कौशाम्बो कोसम्बो for कौशाम्बी कोसम्बी. 102. K S om. वैशंपायनः वइसपाअणो वेसपाअणो. G वैदेशिकं वइदेसिअ वेदेसिअं for वैशिकं. .वेसिअ. After केलासो B T add वैद्यः वइज्जो वेज्जो । कैटभः कइडहो केडहो । वैधव्यं वइहव्व वेहव्वं. After दइवं G adds दइव्वं. After देव G adds देव्व.

**दैत्यादौ ॥ १०३ ॥**

दैत्यादिष्वादेरैच अइ इत्यादेशो भवति ॥ पृथग्योगान्न विकल्पः । दइच्चो दैत्यः । दइण्णं दैन्यम् । दइवअं दैवतम् । कइअवं कैतवम् । वइअब्भो वैदर्भः । वइसाहो वैशाखः । अइसरिअं ऐश्वर्यम् । वइअणणो वैजननः। भइरओ भैरवः । वइएसो वैदेशः । वइसाणरो वैश्वानरः । वइदेहो वैदेहः । वइसाळो वैशालः । सइरं स्वैरम् । चइत्तं चैत्यम् ॥ चैत्ये विश्लेषे न भवति । चेइअं ॥ १०३ ॥

**नाव्यावः ॥ १०४ ॥**

नौशब्दे ऐचः आव इत्यादेशो भवति । णावा ॥ १०४ ॥

**गौरव आत् ॥ १०५ ॥**

गौरवे ऐच आत्वं भवति । गारवं ॥ १०५ ॥

**पौरगे चाउत् ॥ १०६ ॥**

पौरादिषु चकाराद्गौरवे च ऐच अउ इत्यादेशो भवति । पउरो पौरः। सउरो सौरः । मउली मौलिः । कउरवो कौरवः । गउडो गौडः । कउलो कौलः । कउसलं कौशलम् । पउरिसं पौरुषम् । कउच्छेअअं कौक्षेयकम् । सउहं सौधम् । मउणं मौनम् । गउरवं गौरवम् ॥ १०६ ॥

**उच्चैर्नीचैसोरअः ॥ १०७ ॥**

उच्चैर्नीचैःशब्दयोरैच अअ इत्यादेशो भवति । उच्चअं णीचअं ॥ उच्चनीचाभ्या कप्रत्यये सिद्ध तथापि उच्चैर्नीचसो रूपान्तरनिवृत्त्यर्थं वचनम् ॥ १०७ ॥

---

103. T Bp दैत्यगेषु for the Sūtra. B T इत्ययमादेशो for इत्यादेशो. B T पृथग्योगान्नित्यम् for ॰योगान्न विकल्पः. B T read Sk equivalents first and Pr. word thereafter under this Sūtra. B S T वइअवणो for वइअणणो. After वैशालः G adds विशालाया भवं. B S T चैत्यविशेषे for चैत्ये विश्लेषे. 107. B सिद्धेऽपि for सिद्धं तथापि, G om. तथापि. B S T उच्चैर्नीचसोस्तु for उच्चैर्नीचसो.

**ई धैर्ये ॥ १०८॥**

धैर्ये ऐच ईत्वं भवति । धीरं । धीरं हरइ विसाओ, धैर्यं हरति विषादः ॥ १०८ ॥

**वा पुआय्याद्याः ॥ १०९ ॥**

पुआई इत्यादय शब्दाः स्वराद्यादेशविशेषिता वा निपात्यन्ते । (१) पुआई पिशाच उन्मत्तश्च । (२) ऊणंदिअं आनन्दितम् । (३) टोबरो तुम्बुरुः । (४) माहिवाओ माघवातः । (५) सइकोडी शतकोटिः। (६) माइन्दो माकन्दः । (७) ओन्दुरो उन्दुरुः। (८) अलिआ आली । (९) तणसोल्लं तृणशूलम् मल्लिकेत्यर्थः ।(१०) रिट्ठो अरिष्टो दैत्यः काको वा। (११) हुलिअं लघु शीघ्रमित्यर्थः । (१२) किरो किरिः । वराह इत्यर्थः । (१३) वामरोरो वामलूरः वल्मीकम् । (१४) वन्द्रं वृन्दम् । (१५) हेरिम्बो हेरम्बः । (१६) चिक्कं स्तोकम् । (१७) चलणाओहो चरणायुधः ।

---

108. BT om. धैर्यं हरति विषादः. 109. (1) HD. 6.80. B पुआयी for पुआई. (2) HD. 1.141. (3) HD. 4.3. B तोम्बरो, G टिंबरु; $T_2$ ढोंबरो, $T_3$ दोबरो for टोबरो. (4) HD. 6.131. (5) Sk शतकोटिः (6) HD. 6.128. (7) Sk उन्दुरुः. G उदुरो. (8) HD. 1.16. Gp. आलिआ. (9) HD. 5.6. G तणसोल्ली; T' तळसोल्लं तृणशून्यम् for तणसोल्लं. GT मल्लिका for मल्लिकेत्यर्थः. (10) HD. 7.6. BST अरिट्ठो for रिट्ठो. S om. काको वा. (11) Sk लघुकम्. BT दरिअ for हुलिअं. (12) HD. 2.30. (13) Sk BST वामलूरो; Gp हमलूरो for वामरोरो. After वल्मीकम् BT add वसो वृक्षः, मूसिओ मूषिकः, Gp विसो वृषः मूषिक.. (14) HG. 2.79. B T वंत वृन्तम्, Gp बिब वृन्दम् for वन्द्र वृन्दम्. (15) HD. 8.72. (16) HD. 3.21. G चिक्का for चिक्क. After स्तोकम् BT add स्पृष्ट च. (17) HD 3.7. (चलणाउहो). G चलणाऊहो for °ओहो.

(१८) पुआइणिआ पिशाचिनी । (१९) मूसलं मासलम् । (२०) महालवक्खो महालयपक्षः । (२१) चंचरिओ चञ्चरीकः ॥ १०९ ॥

इति श्रीमदर्हनन्दित्रैविद्यदेवश्रीपादप्रसादासादितसमस्तविद्याप्रभाव-
श्रीमत्त्रिविक्रमदेवविरचितप्राकृतव्याकरणवृत्तौ
प्रथमाध्यायस्य द्वितीयः पादः ॥

---

(18) HD, 6.54. B उआणिआ, G पुआइणी, S पुआइणिसा; $T_1$ पुआइणआ, $T_{2\cdot3}$ पुआइणीआ for पुआइणिआ. After पिशाचिनी BT add उन्मत्ता दुःशीला च. Gp उन्मत्तादु शील्योर्वयणिया. (19) HD. 6.137. After मासलम् BT add मुसल्ल. (20) HD. 6.127. BT महल्लअपक्खो, S महल्लपवखो for महालवक्खो. (21) HD. 3.6. BT चंचरीओ for चंचरिओ. Colophon: BKS om. from °मदर्हनन्दि down to श्रीमत्, T has only प्रथमाध्यायस्य द्वितीय. पादः.

## तृतीयः पादः ॥

**एत् साज्झला त्रयोदशगेऽचः ॥ १ ॥**

आदेरित्यनुवर्तते । त्रयोदशादिष्वादेरचः साज्झला सस्वरव्यञ्जनेन परेण सह एत्वं भवति । तेरह त्रयोदश । थेरो स्थविरः, वृद्धो ब्रह्मा वा । एक्कारो अयस्कारः। वेइल्लं विचकिलम् ।। मुद्धविअइल्लपसूणपुञ्जा [ कर्पूर० १·१९ ] इति च दृश्यते ।। तेवीसा त्रयोविंशतिः, तेत्तीसा त्रयस्त्रिंशत् । इत्यादि ॥१॥

**कदले तु ॥ २ ॥**

एत्साज्झलेत्यनुवर्तते । कदले आदेरचः परेण सस्वरव्यञ्जनेन सह एद्भवति तु । केलं कअलं । केली कअली ॥ २ ॥

**कर्णिकारे फोः ॥ ३ ॥**

कर्णिकारे फोर्द्वितीयस्याचः परेण साज्झला सह एत्वं भवति तु । कण्णेरो कण्णिआरो ।। ३ ।।

**नवमालिकाबदरनवफलिकापूगफलपूतर ओत् ॥ ४ ॥**

एष्वादेरचः परेण साज्झला सह ओत्वं भवति । लित्वान्न विकल्पः । णोमालिआ नवमालिका । बोरं बदरम् । णोहलिआ नवफलिका । पोफलं पूगफलम् । पोरो पूतरः, अधमो जलजन्तुर्वा ।। ४ ॥

---

N. B—From this pada onwards, variants form M are included in the Notes. 1. M आदित्यनुवर्तते. K तेरहा त्रयोदशा for तेरह त्रयोदश BT$_{1\cdot2}$ om. वृद्धः. B वेइल्ल, M पेइल्ल पड्किलम्; T$_{1\cdot2}$ वेइळं; T$_3$ वेइळ्ळं for वेइल्लं. BT मुद्धविअइल°, T$_2$, °विचिकिल° for मुद्धविअइल्ल°. G °पुञ्जाइं; T$_3$ °विज्जा for °पुञ्जा. After °पुञ्जा G adds मुग्धविचकिलप्रसूनपुञ्जानि. K तेवीसं for तेवीसा. BT$_1$ तेतीसा; T$_3$ तेतिसा for तेत्तीसा. 2. T कदळे for कदले in the Sūtra. T$_1$ एत्सज्झल चेत्यनुवर्तते. BMT om. स in सस्वर°. BS एत्वं भवति तु for एद्भवति तु. M om. तु. T केळं केळी कअल कअळी for केलं ...कअली. 3. T$_{1\cdot2}$ कर्णिकारे तु फोः for the Sūtra. Gp द्वितीयाचः परेण सस्वरव्यज्जनेन for द्वितीयस्याचः परेण साज्झला. B T om सह. B M T तु भवति for भवति तु S T$_1$ कण्णिआरो for कण्णिआरो. 4. K om परेण. B om सह. T$_{1\cdot2}$ तु भवति for भवति. BT लित्त्वान्नित्यम् for लित्वान्न विकल्पः. G णोहालिआ; T$_3$ णोहणिआ for णोहलिआ. T पोफळं for पोफलं. M om. अधमो जलजन्तुर्वा.

**तु मयूरचतुर्थचतुर्वारचतुर्दशचतुर्गुणमयूखोलूखलसुकुमारोदूखललवण-कुतूहले ॥ ५ ॥**

मयूरादिष्वादेः स्वरस्य परेण सस्वरव्यञ्जनेन सह ओत्वं तु भवति। मोरो मऊरो मयूरः। चोत्थो चउत्थो चतुर्थः। चोव्वारो चउव्वारो चतुर्वारः। चोद्दह चउद्दह चतुर्दश। चोद्दही चउद्दही चतुर्दशी। चोग्गुणो चउग्गुणो चतुर्गुणः। मोहो मऊहो मयूख.। ओहलं उलूहलं उलूखलम्। सोमालो सुउमालो सुकुमारः। ओहलो उऊहलो उदूखलः। लोणं लअणं लवणम्। कोहलं कुऊहलं कुतूहलम्॥ मोर. संस्कृतेऽपीति केचित्, तदप्रसिद्धम् ॥ ५ ॥

**निषण्ण उमः ॥ ६ ॥**

निषण्णे आदेरचः परेण साञ्झला सह उम इत्यादेशो भवति तु। णुमण्णो णिसण्णो ॥ ६ ॥

**अस्तोरखोरचः ॥ ७ ॥**

अधिकारोऽयं 'शो' सल्' [ १·३·८७ ] इति यावत्। यदित ऊर्ध्वमनुक्रमिष्यामः तदस्तोरसंयुक्तस्य अखोरनादेरचः परस्य भवतीति वेदितव्यम्॥ ७ ॥

---

5. B T एष्वादेः for मयूरादिष्वादेः B $T_{1\cdot2}$ om. स in सस्वर°. $T_3$ मयूर for मयूरः. BS चोद्दहो चउद्दहो for चोद्दह चउद्दह. G K चोद्दसी चउद्दसी for चोद्दही चउद्दही. K M सोमारो सुउमारो for सोमालो. T ओहळ for ओहल. $T_1$ उळहल for उलूहलं. T om. ओहलो उऊहलो उदूखल°. $T_{1\cdot2}$ कउहळ, $T_3$ कोउहळ for कुऊहलं. GK कश्चित् for केचित्. 6. T om. निषण्णे. B om. सह. After सह T adds निषण्णे. B T om. तु. $T_1$ णीसण्णो for णिसण्णो. 7. K S $T_2$ °क्रमिष्यते for °क्रमिष्याम. G अनादौ वर्तमानस्याचः for अनादेरच°. Gp अच. स्वरात्परस्य for अचः परस्य.

**प्रायो लुक् कगचजतदपयवाम् ॥ ८ ॥**

असंयुक्तानामनादौ वर्तमानानामचः परेषा क ग च ज त द प य व इत्येतेषा प्रायो लुग्भवति । क—लोकः लोओ । शकटः सअडो । तीर्थकरः तित्थअरो ॥ ग—नगरम् णअरं । नगः णओ । मृगाङ्कः मिअङ्को ॥ च—शची सई । कचग्रहः कअग्गहो ॥ ज—गजः गओ । रजतम् रअअं । प्रजापतिः पआवई ॥ त—स्तुतः सुओ । यतिः जई । रतिः रई । रसातलम् रसाअलं ॥ द—नदी णई । मदनः मअणो । गदा गआ ॥ प—रिपुः रिऊ । विपुलम् विउलं । सुपुरुपः सुउरिसो ॥ य—जयः जयो । वियोगः विओओ । नयनम् णअणं ॥ व—लावण्यम् लाअण्णं । वडवानलः वडआणलो ॥ वग्रहणाद्बकारस्यापि । विबुधः विउहो ॥ प्रायोग्रहणात्क्वचिन्न भवति । सुकुसुमं । पआगजलं । सुगओ । अगरू । सचावं । विजणं । सुतारं । विदुरो । सपावं । समवाओ । देवो । दाणवो ॥ अस्तोरित्येव । अक्को । सग्गो । चच्चा । अज्जुणो । धुत्तो । उद्दामो । विप्पो । सव्वं ॥ अखोरित्येव । कुलं । गङ्गा । चरो । जडो । तमो । दआ । परो । वरो ॥ अच इत्येव । सकरो । संगमो । कंचणं । वंचणा । धणंजओ । अतरं । चंदणं । कंपो । सअंवरो ॥ समासे तु वाक्यविभक्त्यपेक्षया

---

8. KS शकटं सअड for शकटः सअडो. M om. नगरम् णअरं. After कअग्गहो B adds रचना रअणा. After पआवई B adds भजन भअणं. After गआ B adds कदन कअण. After जओ B adds प्रियः प्रिओ. G दवानलः दआणलो for वडवानलः वडआणलो. After वडआणलो BT विविधः add विइ- (T₁उ) हो; GST om. वग्रहणाद् बकारस्यापि. After बकारस्यापि K adds ग्रहणं. After सुकुसुमं T adds कुभजल. T om. पआगजल. B अगरई for अगरू. S सआव for सचावं. After सचाव G S add सचापम्. K reads देवो दाणवो समवाओ for समवाओ देवो दाणवो. BT अको for अक्को. After अक्को B T add ससङ्को. BT संग्गो for सग्गो. After सग्गो B adds सङ्का. BT ग्रुत्तो for धुत्तो. After विप्पो BT add सच्चं. K सव्वो for सव्वं. After सव्व B adds अक्को सग्गो. After परो T adds परः. T om. वरो. After वरो $T_3$ adds. जसो । वळण. K reads चचल वचण G पचाण for वचणा. T अतरिअ for अंतरं. B T °पदत्वमर्पाध्यते for °मपि विवक्ष्यते; M °मपि स्यात्. After भवति

भिन्नपदत्वमपि विवक्ष्यते, तेन तत्र यथादर्शनमुभयमपि भवति। सुहकरो सुहअरो सुखकरः। आअमिओ आगमिओ आगमिकः। जलअरो जलचरो जलचरः। सुअणो सुजणो सुजनः। बहुअरो बहुतरो बहुतरः। सुअहो सुहदो शुभदः सुखदो वा। इत्यादि ॥ बहुलाधिकारात् क्वचिदादेरपि भवति। चिह्नं इण्हं। स पुनः सो उणो। न पुनः ण उणो। स च सो अ॥ क्वचिच्चस्य जः। पिशाची पिसाजी ॥ ८ ॥

**नात्पः ॥ ९ ॥**

आदवर्णात्परस्य अनादेः पः पकारस्य लुङ् न भवति। सवहो शपथः। सावो शापः॥ आदिति किम्। विउलो विपुलः। अनादेरिति किम्। परउट्ठो परपुष्टः ॥ ९ ॥

**यश्रुतिरः ॥ १० ॥**

आदित्यनुवर्तते। 'प्रायो लुक्कगचज॰' [ १·३·८ ] इत्यादिना लुकि सति योऽवशिष्यते अवर्णः, सः अवर्णात्परः लघुप्रयत्नतरयकारश्रुतिर्भवति। शकटम् सयढं। आकरः आयरो। प्रकारः पयारो। आकाशः आयासो। नगरम् णयरं। सागरः सायरो। वचनम् वयणं। आचारः आयारो। रजतम् रययं। भाजनम् भायणं। प्रजापतिः पयावई। कृतम् कयं। पातालम्

---

B adds सहचरो सहअरो सहचरः. $T_1$ सहचरो सहअरो सहचरः.सुहकरोः सुखकरः. BT आअओ आगओ आगतः for आअमिओ आगमिकः. After बहुतरः B adds वित्तअरो वित्तपरो वित्तपरः, धीरअमो धीरयमो धीरतमः, गणवारो गणआरो गणवारः. G इंध; $T_{1\cdot2}$; इत्थं, $T_3$ इद्ध. G सो उण for सो उणो. G ण उण for णउणो. 9. GM om. आद्. BT om.अनादेः. BMST om. विउलो विपुलः। अनादेरिति किम्. B T परिउट्ठो परिपुष्टः for परउट्ठो परपुष्टः. 10. S आदिति वर्तते for आदित्यनुवर्तते. BMT प्रायो लुगित्यादिना for प्रायो लुक्कगचज इत्यादिना. B T प्रकाशः पआसो for प्रकारः पआरो. The Mss. have no special sign to indicate the यश्रुति, they promiscuously use य or the vowel; we follow the majority of Mss. in giving the illustrations. G om. सागरः सायरो. G om. पातालं पायालं. T reads पाताळं

पायालं। पदम् पयं। गदा गया। नादवती णायवई। नयनम् णयणं। जाया जाया। लावण्यम् लायण्णं॥ अवर्ण इति किम्। सउणो शकुनः। पउणो प्रगुणः। पउरं प्रचुरम्। राईवं राजीवम्। रई रतिः। साऊ स्वादुः। वाऊ वायु'। कई कपिः कविर्वा॥ आदित्येव। विअडं विकटम्। देअरो देवरः॥ क्वचिद्भवति। पियइ पिबति॥ १०॥

**कामुकयमुनाचामुण्डातिमुक्तके मो ङ्लुक्॥ ११॥**

कामुकादिषु मकारस्य लुग्भवति। ङानुबन्धत्वाच्छेषस्य स्वरस्य सानुनासिक उच्चारः। कामुकः काउँओ। यमुना जउँणा। चामुण्डा चाउँण्डा। अतिमुक्तकम् अइउँतअं॥ क्वचिद् अइमुत्तअं अइमुंतअं इति च दृश्यते॥ ११॥

**खोऽपुष्पकुब्जकर्परकीले कोः॥ १२॥**

'उकारेणानुबन्धेन स्ववर्ग्याः परिगृह्यन्ते' इति व्याकरणान्तरे सिद्धम्। यथा कुः कवर्गः। चुः चवर्गः। एवं टुतुपवः॥ अपुष्पवाचिनि कुब्जशब्दे कर्परकीलयोश्च कोः कवर्गस्य खो भवति। खुज्जो॥ पुष्पे तु-बन्धेउं कुज्जपसूणं॥ खप्परं। खीलओ॥ १२॥

---

पाआलं. G om. पद पय. $T_1$ पादं for पद. G om. नादवती णाअवई. K S om. लावण्यम् लायण्ण. G पउओ प्रचुरः for पउरं प्रचुरम्. G T om. कविर्वा. G दिअरो for देअरो. T पीअइ for पियइ. 11. G °नासिकोच्चारः. The Mss. have no sign for अनुनासिक; they use अनुस्वार for it. B अतिमुक्तकः for अतिमुक्तकम्. B अइउँत्तओ, G अणिउँतअं; S अतिउत्तकं; T अइउंतकं for अइउँतअं. B अइमुत्तअं for अइमुत्तअ. BT om. अइमुंतअ; B अइमुत्तअं for अइमुतअं. B T om. अइमुतअं; S अइउत्तअ for अइमुतअं. 12. M कोः कवर्गस्य कुचुटुतुपु इति व्याकरणान्तरसिद्धत्वात् for उकारेण... सिद्धम्. B °कूर्पर°; $T_1$ कर्पूर° for °कर्पर° in the Sūtra and Com. BT प्रसिद्धम् for सिद्धं. BT टुतुपुषु, S टु तु पु for टुतुपवः. B बन्धुअ; K बन्धूअ for बन्धेउं. BT खप्परो for खप्पर. B खिलिओ; S खिलओ, $T_1$ खीदो; $T_2$ खलओ for खीलओ.

**छागशृङ्खलकिराते लकचाः ॥ १३ ॥**

कोरित्यनुवर्तते। शृङ्खलकिरातेषु कवर्गस्य ल क च इत्येते यथासंख्यं भवन्ति। छागः छालो। छागी छाली। शृङ्खलम् संकलं। किरातः चिलाओ। पुलिन्दपर्याय एव। कामरूपिणि तु नेष्यते। नमिमो हरकिराअं ॥ १३ ॥

**वैकादौ गः ॥ १४ ॥**

एकादिषु कोर्गकारो वा भवति। एगो। पक्षे एक्को एओ। आगरिसो आअरिसो आकर्षः। लोगो लोओ लोकः। असुगो असुओ असुकः। तित्थगरो तित्थअरो तीर्थकरः। उज्जोअगरो उज्जोअअरो उद्योतकरः। सावगो सावओ श्रावकः। अमुगो अमुओ अमुकः। आगारो आआरो आकारः। इत्यादि ॥ १४ ॥

**खोः कन्दुकमरकतमदकले ॥ १५ ॥**

एषु खोरादेः कवर्गस्य गो भवति। पृथग्योगान्न विकल्पः। गन्दुओ कन्दुकः। मरगअ मरकतम्। मदगलो मदकलः ॥ १५ ॥

**पुन्नागभागिनीचन्द्रिकासु मः ॥ १६ ॥**

एषु कोर्मो भवति। पुण्णामो। भामिणी। चन्दिमा ॥ १६ ॥

**शीकरे तु भहौ ॥ १७ ॥**

शीकरे कवर्गस्य भकारहकारौ तु भवतः। सीहरो सीभरो सीअरो ॥ १७ ॥

---

13. G लकचं for लकचाः in the Sūtra. G इत्येतत् for इत्येते. G T भवति for भवन्ति. G $T_{2\cdot 3}$ om. छागी. B° रूपिणस्तु for °रूपिणि तु. 14. S उद्योगकर. for उद्योतकरः. M om. इत्यादि. 15. M कुमुदक°; $T_1$ कन्तुक° for कन्दुक° in the Sūtra. M T °योगान्नित्यम् for °योगान्न विकल्पः. G गेन्दुअं; S गंदअं; T गंदुअ for गन्दुओ. G मयगलो for मदगलो. 16. B °भगिनी° for भागिनी° in the Sūtra. G T पुण्णामाइं वसन्ते for पुण्णामो. 17. M श्रीकरे तु हभौ; S शिखरे तु हभौ for the Sūtra. B T कोः for कवर्गस्य. K S हभौ for भकारहकारौ. S सिहरो सिखरो for सीहरो ...सीअरो.

**ऊत्वे दुर्भगसुभगे वः ॥ १८ ॥**

अनयोरुत ऊत्वे सति कोर्वकारो भवति । दूहवो । सुहवो ॥ ऊत्व इति किम् । दुहओ सुहओ ॥ १८ ॥

**निकषस्फटिकचिकुरे हः ॥ १९ ॥**

एषु कवर्गस्य हत्वं भवति । णिहसो । फलिहो । चिहुरो ॥ चिहुरः संस्कृतेऽपीति भृङ्गाचार्यः ॥ १९ ॥

**खघथधभाम् ॥ २० ॥**

ह इति वर्तते । असंयुक्तानामनादौ वर्तमानानामचः परेषां ख घ थ ध भ इत्येतेषां प्रायो हकारो भवति । ख—शाखा साहा । मुखम् मुहं । लिखति लिहइ ॥ घ—मेघः मेहो । जघनम् जहणं । श्लाघते सलाहइ ॥ थ—नाथः णाहो । रथः रहो । मिथुनम् मिहुणं । कथयति कहेइ ॥ ध—साधुः साहू । सुधा सुहा । बाधते बाहइ ॥ भ—शुभम् सुहं । स्वभावः सहावो । स्तनभरः थणहरो । शोभते सोहइ ॥ अस्तोरित्येव । सौख्यम् सोक्खं । आख्याति अक्खइ । अर्घः अग्घो । कत्थइ कथ्यते । गृध्रः गिद्धो । उद्धरति उद्धरइ । दर्भः दब्भो ॥ लभ्यते लब्भइ ॥ अखोरित्येव । खगो । घटा । थणो । धणं । भरो ॥ अच इत्येव । संखो । संघो । कंथा । बंधो । रंभा ॥ प्राय इत्येव । सरिसवखलो सर्षपखलः । पलअघणो प्रलयघनः । अत्थिरो अस्थिरः । जिणधम्मो जिनधर्मः । पणट्ठभवो प्रनष्टभवः ॥ २० ॥

---

18. BKST सुभगदुर्भगे in the Sūtra. $T_1$ वा for व. in the Sūtra. 19. KS कोः for कवर्गस्य. After णिहसो BT add णीहसो. After चिहुरो K adds चिकुरः. G दुर्गाचार्य. for भृङ्गाचार्य· against Mss. on the authority of हेमचन्द्र; T आहुराचार्याः. 20. K लाहइ for सलाहइ BT कहअइ; G कहइ for कहेइ. B K T सुहावो; G सहाओ for सहावो. T सुक्खं for सोक्खं. After उद्धरइ T adds उद्धइ उद्धाइ. GK खंभो; S खक्खो for खगो. G K S घंटा for घटा. G धेणू; $T_1$ धणो for थणो. $T_2$ om. अत्थिरो अस्थिरः. G S °भओ for °भवो. $T_{1\cdot3}$ पणट्ठपहवो प्रनष्टप्रभवः for पणट्ठभवः.

**धः पृथकि तु ॥ २१ ॥**

पृथक्शब्दे थस्य धकारो भवति तु । पुधं पिधं पुहं पिहं ॥ २१ ॥

**चोः खचितपिशाचयोः सल्लौ ॥ २२ ॥**

त्वित्यनुवर्तते । खचितपिशाचयोः चोश्चवर्गस्य सकार–द्विरुक्तलकारौ यथासंख्यं तु भवतः । खसिओ खइओ । पिसल्लो पिसाओ ॥ स्त्रियां क्वचिज्जत्वमपि । पिसाजी ॥ २२ ॥

**झो जटिले ॥ २३ ॥**

चोरिति वर्तते । जटिले चवर्गस्य झत्वं तु भवति । झडिलो जडिलो ॥ २३ ॥

**टोर्बडिशादौ लः ॥ २४ ॥**

बडिशादौ टवर्गस्य लत्वं तु भवति । बलिसं बडिसं । गुलो गुडो । णलं णडं । चविलो चविडो । आमेलो आमेडो । णाली णाडी । वेलू वेणू । दालिमं दाडिमं । फालेइ फाडेइ ॥ बडिशगुडनडचपेटापीडनाडीवेणुदाडिमपाटीति । पाटीति पाटयति इति णिजन्तः पटिधातुरिह गृह्यते ॥ २४ ॥

**स्फटिके ॥ २५ ॥**

टोरित्यनुवर्तते । स्फटिके टवर्गस्य लो भवति । पृथग्योगान्नित्यम् । फलिहो ॥ २५ ॥

**लरङ्कोठे ॥ २६ ॥**

अङ्कोठे ठोर्लत्वं भवति । रित्त्वाद् द्वित्वम् । अङ्कोल्लं ॥ २६ ॥

---

21. S ढः; $T_2$ थः for धः; $T_{1\cdot3}$ damaged. G notes that all Mss. used read ढः for धः. 22. $T_1$ खसीओ; $T_2$ खस्सिओ for खसिओ. S विसालो for पिसाओ. 23. GT चोरित्यनुवर्तते. After वर्तते B adds त्विति च. T झटिलो जटिलो for झडिलो. 24. M om. बडिशादौ. Before बडिशादौ B T read त्वित्यनुवर्तते. B दाडिवं for दाडिमं. BT पालेइ पाडेइ for फालेइ फाडेइ. B °दाडिमाः, T दाडिम for °दाडिम. B T om. पाटीति. G पटधातुः for पटिधातुः 26. B अङ्कोडे in the Sūtra and Com. $T_{1\cdot2}$ अकोठे, for अङ्कोठे. G अङ्कोल्लतेल्लतुप्प, Gp S अङ्कोल्लतेल्लं for अङ्कोल्लं.

**ढः कैटभशकटसटे ॥ २७ ॥**

कैटभशकटसटाशब्दे टेर्ढकारो भवति। केढवो। सअढो। सढा ॥ २७ ॥

**ठः ॥ २८ ॥**

असंयुक्तस्यानादौ स्थितस्याचः परस्य ठकारस्य ढो भवति। मठः मढो। कमठः कमढो। शठः सढो। कुठारः कुढारो ॥ अस्तोरित्येव। चिट्ठइ ॥ अखोरित्येव। ठाइ ॥ अच इत्येव। कंठो ॥ २८ ॥

**पिठरे ह्स्तु रश्च ढः ॥ २९ ॥**

ठ इति वर्तते। पिठरे ठस्य ह्त्वं भवति तु, तत्संनियोगे रस्य च ढत्वम्। पिह्ढो पिढरो पिठरः ॥ २९ ॥

**लल् डोऽनुड्डुगे ॥ ३० ॥**

अस्तोरखोरचः परस्य उकारस्य लकारो भवति, अनुड्डुगे उड्वादीन् वर्जयित्वा। लित्त्वान्न विकल्पः। वडवामुखम् वलआमुहं। गरुडः गरुलो। तडाकम् तलाअं। क्रीडति कीलइ ॥ अस्तोरित्येव। कुड्डं कुड्यम् ॥ अखोरित्येव। डमरुओ डमरुकः ॥ अच इत्येव। तोंडं तुण्डम् ॥ अनुड्डुग इति किम्। उड्डु। निबिडं। गउडो। नाडी। पीडिअं। नीडं इत्यादि ॥ ३० ॥

**टो डः ॥ ३१ ॥**

अस्तोरखोरचः परस्य टकारस्य डत्वं भवति। भटः भडो। नटः णडो। घटः घडो। घटते घडइ ॥ अस्तोरित्येव। खट्टंगं खट्वाङ्गम् ॥ अखोरित्येव। टक्को देशः ॥ अच इत्येव। घंटा ॥ क्वचिन्न भवति। अटति अटइ ॥ ३१ ॥

---

27. G °शब्देषु for °शब्दे. B ढत्वं; T डत्वं for ढकारो. B कइढवो for केढवो. B सअढं for सअढो. 28. B T वर्तमानस्य for स्थितस्य. S om. मठः मठो. 29. G इत्यनुवर्तते for इति वर्तते. S रस्य ढः; T डत्वम् for ढत्वम्. 30. BMT लित्त्वान्नित्यम् for लित्त्वान्न विकल्पः B om. डमरुकः; T डमरुअं for डमरुओ. G तडी for नाडी. 31. S असंयुक्तस्यानादौ वर्तमानस्याचः परस्य for अस्तोरखोरचः परस्य. B T टस्य for टकारस्य. After णडो B adds पटः पडो. B टंको देशो; T टंको टंकः for टक्को देशः.

**वेतस इति तोः ॥ ३२ ॥**

ड इत्यनुवर्तते । वेतसे अत इत्वे सति तोस्तवर्गस्य डो भवति । वेडिसो ॥ इतीति किम् । वेअसो ॥ अत एव विधानात् स्वप्नादौ वेतसस्य अत इत्वं वा भवतीति वेदितव्यम् ॥ ३२ ॥

**प्रतिगेऽप्रतीपगे ॥ ३३ ॥**

तोरित्यनुवर्तते । प्रत्यादिषु तोस्तवर्गस्य डो भवति, अप्रतीपगे प्रतीपादीन्वर्जयित्वा । प्रतिपन्नम् पडिवण्णं । प्रतिभासः पडिहासो । प्रतिहारः पडिहारो । प्रतिस्पर्द्धी पाडिप्फद्धी । प्रतिनिवृत्तम् पडिणिअत्तं । प्रतिकरोति पडिकरेइ । प्रतिपत् पडिवआ । प्रतिश्रुत् पडंसुआ । प्रतिमा पडिमा । प्रभृति पहुडि । मृतकम् मडअं । भिन्दिपालः भिण्डिवालो । पताका पडाआ । प्राभृतम् पाहुडं । बिभीतकः बहेडओ । व्यापृतः वावडो । कन्दरिका कण्डरिआ औषधविशेषः । हरीतकी हरडई । इत्यादि ॥ अप्रतिपग इति किम् । प्रतीपम् पईवं । प्रतिज्ञा पइण्णा । संप्रति संपइ । प्रतिसमयम् पइसमअं । प्रतिष्ठा पइट्ठा । प्रतिष्ठानम् पइट्ठाणं । इत्यादि ॥ ३३ ॥

**दंशदहोः ॥ ३४ ॥**

दंशतिदहत्योर्धात्वोस्तवर्गस्य डत्वं भवति । डंसइ । डहइ ॥ ३४ ॥

---

32. B अत इत्यनु°; T₁ स इत्यनु° for ड इत्यनु°. G इति सति for इत्वे सति. 33. B T om. तोः. T₁ पडीहासो for पडिहारो. B M T पडिप्पद्धी for पाडिप्फद्धी. B पडिणिउत्तं; T पडिणिवुत्तं for पडिणिअत्तं. B K पडिसुआ; T पडिस्सुआ for पडंसुआ. After वावडो B adds व्याहृतं वाडिडो. T₁ वावसो for वावडो. G कन्दलिका कंदलिआ for कन्दरिका कण्डरिआ. T हरीडई for हरडई. After पइसमअं B adds प्रतिसमजं पइसमजं. B K T प्रतिस्थानं for प्रतिष्ठानम्.

**दम्भदरदर्भगर्दभदष्टदशनदग्धदाहदोहददोलादण्डकदने तु ॥ ३५ ॥**

दम्भादिषु तवर्गस्य डो भवति तु । डम्भो दम्भो । डरो दरो । डब्भो दब्भो । गड्डहो गद्दहो । डट्ठो दट्ठो । डसणं दसणं । डड्ढो दड्ढो । डाहो दाहो । डोहलं दोहलं । डोला दोला । डण्डो दण्डो । कडणं कदनं । दरशब्दे भयार्थवृत्तावेव । अन्यत्र दरदलिअं ॥ दोहदे दम्भादिसाहचर्यादाद्यस्यैव ॥ ३५ ॥

**तुच्छे चच्छौ ॥ ३६ ॥**

तुच्छे तवर्गस्य चकारछकारौ तु भवतः । चुच्छं छुच्छं ॥ ३६ ॥

**टल् त्रसरवृन्ततूबरतगरे ॥ ३७ ॥**

एषु तवर्गस्य टकारो भवति। लित्वान्न विकल्पः। टसरो । वेण्टं । तालवेण्टं । टूबरो तूबरः शृङ्गरहितोऽनड्वान्, श्मश्रुरहितः पुरुषो वा । टगरो तगरः ओषधिविशेषो वृक्षविशेषो वा ॥ ३७ ॥

**हः कातरककुद्वितस्तिमातुलिङ्गे ॥ ३८ ॥**

एषु तवर्गस्य हत्वं भवति । काहलो । कउहं । विहत्थी । माहुलिङ्गं ॥ मातुलुङ्गस्य तु माउलुङ्गं ॥ ३८ ॥

**तु वसतिभरते ॥ ३९ ॥**

अनयोस्तवर्गस्य हत्वं वा भवति । वसही वसई । भरहो भरओ ॥ ३९ ॥

---

35. S °धर for °दर° in the Sūtra. After °दर्भ° in the Sūtra MT add °गर्भ. S कदनेषु for कदने. T₁ दर्भादिषु for दम्भादिषु. B डसणो दसणो for डसण दसण. After दसणं K adds डट्ठं दट्ठं. After दरदलिअ BT add अर्धदलितम्. After आद्यस्यैव G adds: बहुलाधिकारात् सड्ढो (शब्द) इति तु सिद्धम्. 36. G तकारस्य for तवर्गस्य. After छुच्छं G adds तुच्छम्. 37. M om. the Sūtra. and Com. T डसरो for टसरो. S om. तालवेण्टं. After पुरुषो वा B T add जनको वा. S om. तगरः ओषधिविशेषो वृक्षविशेषो वा. G औषध° for ओषधि°. 38. M om. the Sūtra and Com. G °मातुलिङ्गेषु for मातुलिङ्गे in the Sūtra; S °मातुलुंगे in the Sūtra. BT काहरो for काहलो. B T om. मातुलुङ्गस्य तु माउलुङ्गं. 39. M om. the Sūtra and Com. GT वसतिभरते तु for the Sūtra. KS तु for वा.

**लः पलितनिम्बकदम्बे ॥ ४० ॥**

एषु तवर्गस्य लो भवति वा। पलिल पलिअं। लिम्बो णिम्बो। कलम्बो कअम्बो ॥ ४० ॥

**दोहदप्रदीपशातवाहनातस्याम् ॥ ४१ ॥**

दोहदे प्रपूर्वकदीप्यतिधातौ शातवाहने अतस्या च तवर्गस्य लत्वं भवति। पृथग्योगान्नित्यम्। दोहलो। पलीवेइ। पलित्तं। सालवाहणो सालाहणो। अलसी ॥ ४१ ॥

**रल् सप्तत्यादौ ॥ ४२ ॥**

सप्तत्यादौ तवर्गस्य रत्वं भवति। लित्वान्नित्यम्। सप्ततिः सत्तरी। सप्तदश सत्तरह। एकादश एआरह। द्वादश बारह। त्रयोदश तेरह। पञ्चदश पण्णरह। अष्टादश अट्ठारह। गग्गरं गद्गदम् इत्यादि॥ ४२ ॥

**अद्रुमे कदल्याम् ॥ ४३ ॥**

अद्रुमवाचिनि कदलीशब्दे तोः रत्वं भवति। करली ॥ अद्रुम इति किम्। कअली केली ॥ ४३ ॥

**कदर्थिते खोर्वः ॥ ४४ ॥**

कदर्थिते खोरादेस्तवर्गस्य वत्वं भवति। कवट्ठिओ ॥ ४४ ॥

**पीते ले वा ॥ ४५ ॥**

व इति वर्तते। पीते स्वार्थिकलकारे सति तोर्वकारो भवति। पीवलं पीअलं ॥ ल इति किम्। पीओ ॥ ४५ ॥

---

40. G लो निम्बपलितयोः, S लःपलितबिम्बकदबे for the Sūtra. B °नितम्ब° for निम्ब° in the Sūtra. G अनयोः for एषु. B T om. वा. B णिलम्बो णिअम्बो for लिम्बो णिम्बो. After कअम्बो G adds: इत्येतौ कडम्बकदम्बयोर्वेस्वलोपयोर्भवतः. 41. G °सात° in the Sūtra and Com. G T प्रपूर्वे दीप्यतौ धातौ; S प्रपूर्वदीप्यतौ धातौ for प्रपूर्वकदीप्यतिधातौ. B K T डोहलो for दोहलो. S om. सालाहणो. 42. KS सप्तत्यादिषु for सप्तत्यादौ. K S लित्वाच्च विकल्पः for लित्वान्नित्यम्. 43. After भवति K adds कदली. 44. T कवत्थिओ for कवट्ठिओ. 45. T पीतले वा for the Sūtra. G तोरिति वर्तते; B T व इत्यनुवर्तते for व इति वर्तते. B पविलो पीअलो for पीवलं पीअलं.

**डो दीपि ॥ ४६ ॥**

दीप्यतौ धातौ तवर्गस्य डकारो वा भवति। डिप्पइ दिप्पइ ॥४६॥

**ढः पृथिव्यौषधनिशीथे ॥ ४७ ॥**

एषु तवर्गस्य ढो वा भवति। पुढवी पुहवी। ओसढं ओसहं। णिसीढो णिसीहो ॥ ४७ ॥

**प्रथमशिथिलमेथिशिथिरनिषधेषु ॥ ४८ ॥**

ढ इति वर्तते। प्रथमादिषु तोर्ढत्वं भवति। पृथग्योगान्नित्यम्। पढमं पुढमं। सिढिलं सढिलं। मेढी। सिढिरो। णिसढो ॥ ४८ ॥

**णर्दिना रुदिते ॥ ४९ ॥**

रुदिते तवर्गस्य दि इत्यवयवेन सह णत्वं भवति। रित्वाद् द्वित्वम्। रुण्णं ॥ अत्र केचिद् ऋत्वादिषु तो द इत्यारब्धवन्तः, तच्छौरसेनीमागधी-विषय एव दृश्यत इति नोच्यते। प्राकृते तु ऋतुः उऊ। रजतम् रअअं। एतत् एअं। गतः गओ। आगतः आगओ। साम्प्रतम् सपअं। यतः जओ। ततः तओ। कृतम् कअं। हतम् हअं। हताशः हआसो। श्रुतः सुओ। सुकृती सुकिई। निर्वृतिः णिव्वुई। तातः ताओ। कातरः काअरो। द्वितीयः दुईओ इत्यादयः प्रयोगा भवन्ति। क्वचित्संभवेऽपि 'तद्व्यत्ययश्च' [३·४·६९] इति सिद्धम् ॥ ४९ ॥

---

46. $T_1$ धो दीपि; $T_3$ धो दीपिः for the Sūtra. T तवर्गस्य धो भवति for तवर्गस्य डकारो वा भवति. T धिप्पइ for डिप्पइ. 47. BT °ओषधि° in the Sūtra. T om. वा. BT ओसढी ओसही for ओसढं ओसहं. After णिसीहो T adds निशिथः. 48. T °मैथिल° for °मेथि° in the Sūtra. $T_2$ °शिशिर° for °शिथिर° in the Sūtra. $T_1$ °निषेधेषु for °निषधेषु in the Sūtra. $T_3$ थ इति for ढ इति. G om. पृथग्योगान्नित्यम्. G T om. पुढमं. B T om. सढिलं. T मेढिलो for मेढी. G T सिढिलो for सिढिरो. T णिसेढो for णिसढो. 49. M ना रुदिते; $T_1$ णो रदिना रुदिते; $T_2$ णो ररदिना रुदितें; $T_3$ णौ दिना रुदितेः for the Sūtra. G om. तो. T om द B T सुकृतिः for सुकृती. After सुकिई S adds आकृतिः आकिई. B T निर्वृतः णिव्वुओ for निर्वृतिः णिव्वुई. After णिव्वुई G adds निर्वातः निव्वाओ. G om. कातरः काअरो. T om. कतरः कअरो. B T बीओ for दुईओ. B T प्रयोगा बहवः संति or प्रयोगा भवन्ति.

**णो वातिमुक्तके ॥ ५० ॥**

अतिमुक्तके तवर्गस्य णत्वं वा भवति । अणिउँतअं अइउँतअं अइमुत्तअं ॥ ५० ॥

**गर्भिते ॥ ५१ ॥**

ण इत्यनुवर्तते । गर्भिते तवर्गस्य णत्वं भवति । पृथग्योगान्नित्यम् । गब्भिणो ॥ ५१ ॥

**नः ॥ ५२ ॥**

अस्तोरखोरचः परस्य नकारस्य णकारो भवति । कनकं कणअं । धनं धणं । माणइ मानयति ॥ ५२ ॥

**आदेस्तु ॥ ५३ ॥**

न इत्यनुवर्तते । शब्दानामादेर्नकारस्य णत्वं भवति तु । नदी णई नई । नयति णेइ नेइ ॥ अस्तोरित्येव । न्यायः नाओ ॥ ५३ ॥

**नापिते ण्हः ॥ ५४ ॥**

नापिते नकारस्य ण्ह इत्यादेशस्तु भवति । ण्हाविओ णाविओ नाविओ ॥ ५४ ॥

**पो वः ॥ ५५ ॥**

असंयुक्तस्यानादौ वर्तमानस्याचः परस्य पकारस्य वकारः स्यात् प्रायः। शपथः सवहो । शापः सावो । उपसर्गः उवसग्गो । प्रदीपः पईवो । पापम् पावं । उपमा उवमा । कपिलः कविलो । कुणपम् कुणवं । कलापः कलावो ।

---

50. After अणिउँत्तअ B adds अणिउत्तअं अइउत्तअं. 51. G णमित्यनुवर्तते. T om. पृथग्योगान्नित्यम्. G T गब्भिणो for गब्भिणो. 52. K S णो for णकारो. $T_2$ कणकं for कणअं. T घणंजओ for धणं. B माणेइ for माणइ. T माणअंति मानयन्ति for माणइ मानयति. 53. S T णो for णत्वं. 54. G वा for तु. S om. तु. G K T om. णाविओ. 55. Before असंयुक्तस्य G reads प्रायः, but om. it at the end of the sentence. G भवति for स्यात्. K S T प्रायो भवति for स्यात्प्रायः. T कुणपः कुणवो for कुणपं कुणवं. After महीवालो B T add नरपतिः नरवई.

कपालम् कवालं । महीपालः महीवालो । गोपायति गोवाअइ । तपति तवइ ॥ अस्तोरित्येव । विप्रः विप्पो ॥ अखोरित्येव । पडइ पतति । पढइ पठति ॥ अच इत्येव । कंपइ कम्पते ॥ प्राय इत्येव । कपिः कई । रिपुः रिऊ ॥ एतेन पकारस्य प्राप्तयोर्लोपवकारयोर्यस्मिन्कृते श्रुतिसुखमुत्पद्यते स तत्र विधेयः ॥ ५५ ॥

**फः पाटिपरिघपरिखापरुषपनसपारिभद्रेषु ॥ ५६ ॥**

प इत्यनुवर्तते । णिजन्ते पटिधातौ परिघादिषु च पस्य फत्वं भवति । पाटयति फालेइ फाडेइ । परिघः फलिहो । परिखा फलिहा । परुषः फरुसो । पनसः फणसो ॥ फनसः संस्कृतेऽपीति केचित् ॥ पारिभद्रः फालिहद्दो ॥५६॥

**नीपापीडे मो वा ॥ ५७ ॥**

नीपे आपीडे च पस्य मो वा भवति । नीमो नीवो । आमेडो आवेडो ॥ ५७ ॥

**रल् पापर्द्धौ ॥ ५८ ॥**

पापर्द्धौ पस्य रो भवति । लित्त्वान्न विकल्पः । पारद्धी । पापर्द्धि-मृगया ॥ ५८ ॥

**प्रभूते वः ॥ ५९ ॥**

प्रभूते पस्य वो भवति । वहुत्तं ॥ ५९ ॥

---

T गोपयति गोवइ for गोपायति गोवाअइ. G om. पडइ पतति. B पटइ for पडइ. T om. पढइ पठति. B कविः for कपिः. After एतेन B T add प्रकारेण. M पस्य for पकारस्य. 56. G om. पारि in °पारिभद्रेषु in the Sūtra. M °पुरुष° for परुष in the Sūtra. T om. च. T om. फाडेइ. $T_2$ फरिखा फाळिहा for फलिहा. K फलुसो for फरुसो. S om. फनसः... केचित्. G om. इति केचित्. $T_3$ पारिभद्रं for पारिभद्रः. K पालिभद्दं; $T_3$ फारिभद्दं for फालिहद्दो. 57. G आमेलो; T आमेलो आवेलो for आमेडो. 58. BT लित्त्वान्नित्यम् for लित्त्वान्न विकल्पः. G K om. पापर्द्धिर्मृगया.

**फस्य भहौ वा ॥ ६० ॥**

अस्तोरखोरचः परस्य फकारस्य भकारहकारौ यथादर्शनं व्यवस्थित-विभाषया भवतः । क्वचिद् भः । रेफः रेभो । शिफा सिभा ॥ क्वचित्तु हः । मोत्ताहलं मुक्ताफलम् ॥ क्वचिदुभावपि । सफलम् सहलं सभलं । शेफालिका सेहालिआ सेभालिआ । शफरी सहरी सभरी । गुभइ गुहइ गुम्फति ॥ अस्तोरित्येव । पुप्फं पुष्पम् ॥ अखोरित्येव । फणी ॥ अच इत्येव । गुंफइ ॥ प्राय इत्येव । कसणफणी कृष्णफणी ॥ ६० ॥

**बो वः ॥ ६१ ॥**

अस्तोरखोरचः परस्य बकारस्य वो भवति । शबलः सवलो । अलाबुः अलावू ॥ ६१ ॥

**ङ्वयौ कबन्धे ॥ ६२ ॥**

कबन्धे वस्य वकारयकारौ भवतः । ङित्त्वात्सानुनासिक उच्चारो वकारस्य । कबन्धः कवँधो कयंधो ॥ ६२ ॥

**भिसिन्यां भः ॥ ६३ ॥**

बिसिनीशब्दे बस्य भो भवति । भिसिणी ॥ ६३ ॥

**वो भस्य कैटभे ॥ ६४ ॥**

कैटभे भस्य वो भवति । कइढवो ॥ ६४ ॥

**त्वभिमन्यौ मः ॥ ६५ ॥**

व इत्यनुवर्तते । अभिमन्यौ मस्य वो भवति तु । अहिवण्णू अहिमण्णू ॥ ६५ ॥

---

60. M T₃ हभौ in the Sūtra. M om. वा in the Sūtra. T₃ हकारभकारौ for भकारहकारौ. BT °विभाषाया for °विभाषया. G मुत्ताहलं for मोत्ताहल. G सोहलिआ for सेहालिआ. B गुंहइ गुंभइ for गुभइ गुहइ. K गुफंति for गुम्फति. BT गुप्फ गुल्फम् for पुप्फ पुष्पम्. 61. G K असंयुक्तस्यानादौ स्थितस्य for अस्तोरखो°. 62. T बयौ for ङ्वयौ in the Sūtra. K बकारस्य for बस्य. G ङित्त्वाद्वकारस्यानुनासिकः; S ङित्त्वाद्वकारः सानुनासिकः for ङित्वा...वकारस्य. 63. G M भकारो for भो. 64. G K वत्वं for वो. G केढवो; T केडवो for कइढवो. 65. T om. तु. S om. अहिमण्णू.

**मन्मथे ॥ ६६ ॥**

म इत्यनुवर्तते । मन्मथे आदेर्मस्य वो भवति । पृथग्योगान्नित्यम् । वम्महो ॥ ६६ ॥

**तु ढो विषमे ॥ ६७ ॥**

विषमशब्दे मस्य ढो भवति । विसढो विसमो ॥ ६७ ॥

**यो जर्तीयानीयोत्तरीयकृत्येषु ॥ ६८ ॥**

त्वित्यनुवर्तते । तीये अनीये च प्रत्यये उत्तरीयशब्दे कृद्विहितयप्रत्यये च यकारस्य जकारो भवति । रित्त्वाद् द्वित्वम् । तीये—द्वितीय· विइज्जो विइओ । तृतीयः तइज्जो तइओ ॥ अनीये—करणीयम् करणिज्जं करणीअं । विस्मयनीयम् विम्हअणिज्जं विम्हअणीअं । यापनीयम् जावणिज्जं जावणीअं । उत्तरीयम् उत्तरिज्जं उत्तरीअं ॥ कृत्ये—पेया पेज्जा पेआ । मेयम् मेज्जं मेअं ॥ ६८ ॥

**इन्मयटि ॥ ६९ ॥**

य इत्यनुवर्तते । मयट्प्रत्यये यस्य इकारो भवति तु । विषमयः विसमइओ विसमओ ॥ ६९ ॥

**छायायां होऽकान्तौ ॥ ७० ॥**

अकान्तौ वर्तमाने छायाशब्दे यस्य हत्वं तु भवति । वच्छस्स छाहा वच्छस्स छाआ । पुद्गलपर्यायः ॥ सच्छाहं सच्छाअं ॥ अकान्ताविति किम् । मुहच्छाआ । मुखकान्तिरित्यर्थः ॥ ७० ॥

**यष्ट्यां लल् ॥ ७१ ॥**

यष्ट्यां यस्य लत्वं भवति । लित्त्वान्न विकल्पः । लट्ठी यष्टि· । वेलुलट्ठी वेणुयष्टिः । चूअलट्ठी चूतयष्टिः । महुलट्ठी मधुयष्टिः ॥ ७१ ॥

---

66. M म इत्यनुवृत्तिः for म इत्यनुवर्तते. 67. B डो in the Sūtra and Com. B विसडो, $T_1$ विसवो for विसढो. M ढस्तु स्यात् for ढो भवति. 68. T नीये for अनीये. B M कृद्विहितप्रत्यये; $T_1$ क्वचिद्विहितप्रत्यये for कृद्विहितयप्रत्यये. G om. द्वितीयः विइज्जो विइओ. G कृद्ये for कृत्ये. 69. T इम्मयटि for the Sūtra. S मयटि प्रत्यये for मयट्प्रत्यये. 70. M अकान्तिवाचिनि for अकान्तौ वर्तमाने. B om. तु. 71. BT om. लित्त्वान्न विकल्पः. BT वेणुलट्ठी for वेलुलट्ठी. T om. महुलट्ठी मधुयष्टिः.

**कतिपये वहशौ ॥ ७२ ॥**

कतिपये यस्य वत्वहत्वे भवतः । हत्वे शिस्त्वात्पूर्वस्य दीर्घः । कइअवं कइवाहं ॥ ७२ ॥

**अर्थपरे तो युष्मदि ॥ ७३ ॥**

अर्थपरे युष्मच्छब्दे यस्य तकारो भवति । तुम्हच्चिअं यौष्माकम् । तुम्हकेरो युष्मदीयः ॥ अर्थपर इति किम् । जुम्हदम्हप्पअरणं, युष्मदस्मत्प्रकरणम् ॥ ७३ ॥

**आदेर्जः ॥ ७४ ॥**

पदादेर्यस्य जो भवति । यशः जसो । यमः जमो । युवतिः जुवई । याति जाइ ॥ आदेरिति किम् । अवअवो । विणओ ॥ बहुलाधिकारात्सोपसर्गस्यानादेरपि । संजोओ संयोगः । संजमो संयमः । अपजसो अपयशः ॥ क्वचिन्न भवति । प्रयोगः पओओ ॥ ७४ ॥

**भ्यौ बृहस्पतौ तु बहोः ॥ ७५ ॥**

बृहस्पतौ वकारहकारयोर्यथासंख्यं भकारयकारौ तु भवतः । भयप्पई बहप्पई ॥ ७५ ॥

**रो डा पर्याणे ॥ ७६ ॥**

पर्याणे रेफस्य डा इत्ययमादेशो भवति । पडाआणं पल्लाणं ॥ ७६ ॥

**लो जठरवठरनिष्ठुरे ॥ ७७ ॥**

र इति वर्तते । जठरादौ रस्य लत्व वा भवति । जठरं जढलं जढरं । वठरः वढलो वढरो । निष्ठुरः णिट्ठुलो णिट्ठुरो ॥ भसलशब्दो भ्रमरपर्यायः संस्कृतवदेव ॥ ७७ ॥

---

72. B कइवहं for कइवाहं. 73. Before अर्थपरे BT read य इत्यनुवर्तते. After भवति B adds तुम्हे च्चिअ यूयमेव for तुम्हच्चिअं. K om. तुम्हकेरो. After तुम्हकेरो T adds तुम्हेविअ. 74. After किम् B adds आमओ. G अवजसो for अपजसो. 75. MT ह्यौ for भ्यौ in the Sūtra. T बहे for बहोः in the Sūtra. K M T हकारयकारौ for भकारयकारौ. K T om. तु. M $T_1$ हअप्पई; $T_3$ अहप्पई for भयप्पई. $T_{1\cdot3}$ विहप्पई for बहप्पई. 76. G T पडायाणं; $T_3$ पड्डाणं for पडाआणं. 77. T र इत्यनुवर्तते. B T om. वा. $T_2$ हसळशब्दो for भसलशब्दो. B सस्कृत इव; S संस्कृत एव.

**हरिद्रादौ ॥ ७८ ॥**

हरिद्रादिषु रस्य लत्वं भवति । पृथग्योगान्नित्यम् । हलद्दी हरिद्रा । इङ्गालो अङ्गारः । चलणो चरणः । जहुट्ठिलो युधिष्ठिरः । सउमालो सुकुमारः । सिढिलो शिथिरः । सक्कालो सत्कारः । मुहलो मुखरः । वलुणो वरुणः । चिलाओ किरातः । लुग्गो रुग्णः । अवद्दाल अपद्वारम् । कलुणो करुणः । दलिद्दो दरिद्रः । फलिहो परिघः । फलिहा परिखा । दलिद्दाइ दरिद्राति । मच्छलो मत्सरः । संवच्छलो संवत्सरः । फालिहद्दं पारिभद्रम् । दालिद्दं दारिद्र्यम् । काहलो कातरः । इत्यादि ॥ बहुलाधिकारादङ्गारस्य कृतेत्वस्यैव । अन्यत्र अङ्गारो ॥ चरणस्य पादार्थवृत्तेरेव । अन्यत्र चरणकरणं ॥ किराते चकारसंनियोग एव । अन्यत्र नमिमो हरकिराअं ॥ ७८ ॥

**किरिवेरे डः ॥ ७९ ॥**

अनयो रेफस्य डो भवति । किडी किरिः, वराहो गर्तो मूषिको गन्धर्वो वा । वेडो वेरः, भीरुः शरभः करभो मण्डूको दुन्दुभिर्वा ॥ ७९ ॥

**खोः करवीरे णः ॥ ८० ॥**

करवीरे खोरादे रेफस्य णत्वं भवति । कणवीरो ॥ ८० ॥

**लो ललाटे च ॥ ८१ ॥**

ण इत्यनुवर्तते । ललाटे आदेर्लकारस्य णो भवति । चकारः खोरित्यनुवृत्त्यर्थः । णिडालं णडालं ॥ ८१ ॥

---

78. T हळिद्दी for हलद्दी. BT जुहुट्ठिलो for जहुट्ठिलो. G सुउमालो for सउमालो After सउमालो •S T add सोमालो. After रुग्णः B adds संपद्दालं संपद्द्वारम्; G adds रोगो भुग्गो वा. T सपद्दालं सपद्दारं for अवद्दालं अपद्वारम्. B फालिहद्दो, T पाळिहद्दो for फालिहद्द. T om. अन्यत्र. B श्लोकपादार्थ°, GMT पदार्थ° for पादार्थ°. B चरणप्पहरणं, T चरणं दारुणं for चरणकरणं. B किरातस्य for किराते. T चकारसंयोगे for चकारसनियोगे. 79. G किरिभेरे; M S किरिहेरे; $T_{1\cdot2}$ किरीबोरे for किरिवेरे in the Sūtra. T ढः for डः in the Sūtra. T om. किरिः. S om. वराहो...गन्धर्वो वा. B गर्वो for गर्तो. G भेडो भेरः; T बोढो भीरुभेदः for वेडो वेरः. G om. शरभः. G करभस्सरो for करभो. 80. G रकारस्य; S रस्य for रेफस्य. 81. B इति वर्तते; M इत्यनुवृत्तिः for इत्यनुवर्तते. T om. णडालं.

**लोहललाङ्गललाङ्गूले वा ॥ ८२ ॥**

एष्वादेर्लकारस्य णो वा भवति। णोहलो लोहलो। लोहलः शबर-विशेषः। णंगलं लङ्गलं। णंगूलं लंगूलं॥ ८२ ॥

**स्थूले रल्तश्चौत् ॥ ८३ ॥**

स्थूले लस्य रत्वं लिद्भवति, तत्संनियोगे ऊत ओत्वं च भवति। थोरो॥ थूलहद्दो इति तु स्थूरस्य हरिद्रादिलत्वे भविष्यति॥ ८३ ॥

**बो मः शबरे ॥ ८४ ॥**

शबरे बस्य मो भवति। समरो ॥ ८४ ॥

**नीवीस्वप्ने वा ॥ ८५ ॥**

अनयोर्वस्य मो वा भवति। नीमी नीवी। सिमिणो सिविणो॥ ८५ ॥

**हस्य घो बिन्दोः ॥ ८६ ॥**

बिन्दोः परस्य हस्य घत्वं वा भवति। संघारो संहारो संहारः। सिंघो सिंहो सिंहः॥ क्वचिदबिन्दोरपि। दाघो दाहः ॥ ८६ ॥

**शोः सल् ॥ ८७ ॥**

अस्तोरखोरचः [ १·३·७ ] इति निवृत्तम्। शोः शषसाना सकारो भवति। ल्त्वान्नित्यम्। शं–शब्दः सद्दो। कुशः कुसो। नृशंसः णिसंसो। वंशः वंसो। अश्वः आसो। श्मश्रूः मंसू। श्यामा सामा। दश दस। शोभते सोहइ॥ ष–षण्ढः सण्डो। निकषः णिहसो। कषायः कसाओ। विष्वक् वीसुं। वर्षः वासो। तुष्यति तूसइ। शेषः सेसो॥ ८७ ॥

---

82. BMST लाहल° for लोहल° in the Sūtra. M om. लाङ्गल° in the Sūtra. BT शफरविशेषः; Bp G शब्दविशेषः for शबरविशेषः 83. G रो for रत्वं. B तत्संनियोगेन for °संनियोगे. G T om. च. B थूलहलद्दो for थूलहद्दो. B स्थूलशब्दस्य; T स्थूलस्य for स्थूरस्य. 86. T हकारस्य for हस्य. 87. M om. from ल्त्वात् to तूसइ. T साल् for सल्. BT श्वश्रूः for श्मश्रुः. B ससू; $T_{1\cdot2}$ सुस्; $T_3$ सस्सू for मंसू. B दशा दसा for दश दस. T णीसहो for णिहसो. $BT_1$ वर्षा वासा; $T_2$ वर्षा वरिसा

**प्रत्यूषदिवसदशपाषाणे तु हः ॥ ८८ ॥**

शोरित्यनुवर्तते। प्रत्यूषादिषु शषसाना हत्वं भवति तु। पच्चूहो पच्चूसो। दिअहो दिअसो। दह दस। दहमुहो दसमुहो। दहबलो दसबलो। दहरहो दसरहो। एआरह एआरस। बारह बारस। तेरह तेरस। पाहाणो पासाणो॥ ८८॥

**स्नुषायां ण्ह फोः ॥ ८९ ॥**

स्नुषाशब्दे फोर्द्वितीयस्य शोः ण्ह इत्यादेशस्तु भवति। सुण्हा सुसा स्नुषा॥ ८९॥

**छल् षट्शमीसुधाशावसप्तपर्णे ॥ ९० ॥**

एषु शषसाना छत्वं लिद्भवति। छट्ठी षष्ठी। छप्पओ षट्पदः। छम्मुहो षण्मुखः। छमी शमी। छुहा सुधा। छावो शावः। छत्तिवण्णो सप्तपर्णः॥९०॥

**सिरायां वा॥ ९१ ॥**

सिराशब्दे शोः छो वा भवति। छिरा सिरा॥ ९१ ॥

**लुक्पादपीठपादपतनदुर्गादेव्युदुम्बरेऽचान्तर्दः ॥ ९२ ॥**

पादपीठादिषु अन्तर्वर्तमानस्य दकारस्य अचा सहितस्य लुग्वा भवति। पावीढं पाअवीढं पादपीठम्। पावडणं पाअवडणं पादपतनम्। दुग्गावी दुग्गाएवी दुर्गादेवी। उम्बरो उउम्बरो उदुम्बरः॥ अन्तरिति किम्। दुर्गादेव्या आदौ मा भूत्॥ ९२ ॥

---

88. G हकारो for हत्वं. M T पच्चूसो for पच्चूसो. BT₁ om. एआरस बारस तेरस. 89. G om. शोः. 90. Bp T॰ शाप॰; G ॰शाब॰ in the Sūtra. K छल् षष्ठषट्पदषण्मुखशमी॰, M छल् षट्षट्पद॰ for छल्षट्॰ in the Sūtra. After भवति K adds छट्ठो षष्ठः. M छाओ; T छावो शापः for छावो शावः. 91. S शिराया for सिरायां in the Sūtra and Com. 92. T पावीडं for पावीढं. T om. दुग्गावी. B दुग्गाई दुग्गादेई for दुग्गावी दुग्गादेवी. K उदुंबरो for उउम्बरो. G T ॰देव्यां for ॰देव्या.

**व्याकरणप्राकारागते कगोः ॥ ९३ ॥**

लुगित्यनुवर्तते । वेति वर्तते अचेति च । व्याकरणादिषु ककारगकारयोरचा सह लुग्वा भवति । वारण वाअरणं । । पारो पाआरो । आओ आअओ ॥ ९३ ॥

**एवमेवदेवकुलप्रावारकयावज्जीवितावटावर्तमानतावति वः ॥ ९४ ॥**

एवमेवादिष्वन्तर्वर्तमानस्य वकारस्य अचा सहितस्य लुग्वा भवति । एमेअ एअमेअ । देउलं देवउलं । पारओ पावारओ । जा जाव । जीअं जीविअं । अडो अवडो । अत्तमाणं आवत्तमाणं । ता ताव ॥ अन्तरित्येव । एवमेवेत्यन्त्यस्य न स्यात् ॥ ९४ ॥

**ज्योर्दनुजवधराजकुलभाजनकालायसकिसलयहृदयेषु ॥ ९५ ॥**

दनुजवधादिषु ज्योर्जकारयकारयोरचा सहितयोर्लुग्वा भवति । दणुवहो दणुअवहो दनुजवधः । राउलं राअउलं राजकुलम् । भाणं भाअणं भाजनम् । कालासं कालाअसं कालायसम् । किसलं किसलअं किसलयम् । हिअं हिअअं हृदयम् ॥ महण्णवसमा सहिआ जाला ते सहिअएहिं घेप्पन्ति, महार्णवसमाः सहृदया यदा ते सहृदयैर्गृह्यन्ते ॥ ९५ ॥

---

93. T om. लुगित्यनुवर्तते. K वेति अचेति च; $T_3$ लुगित्यचेति च for वेति वर्तते अचेति च. T सहितयोः for सह. 94. $T_1$ °तावती वा; $T_2$ °तावतिर्वा, $T_3$ °तावतीव for °तावति वः in the Sūtra. BT एव्वं एव्व; S एकमेव for एअमेअ. G आत्तमाणं for अत्तमाणं. T आअत्तमाणं for आवत्तमाणं. B T मा भूत् for न स्यात्. 95. G K $T_3$ om. °वध° in the Sūtra. B G °भोजन° for °भाजन° in the Sūtra. $T_1$ °काळायसी° for °कालायस° in the Sūtra. G K M T दनुजादिषु for दनुजवधादिषु. $T_1$ सहितस्य यो for सहितयोः. K राकुलं राजकुलं for राउलं राअउलं. G भोणं भोअणं. $BT_3$ महासुसमा; $T_1$ ममासुसमा for महण्णवसमा. $T_1$ जाद दे; $T_2$ जदा दे for जाला ते. B om. जाला ते सहिअएहिं घेप्पन्ति. B ममासुसमाः for महार्णवसमाः. B om. यदा ते सहृदयैर्गृह्यन्ते.

**अपतौ घरो गृहस्य ॥ ९६ ॥**

गृहस्य घर इत्यादेशो वा भवति पतिशब्दः परो न भवति चेत्। घरो गृहम्। घरसामी गृहस्वामी। राअघरं राजगृहम्॥ अपताविति किम्। गहवई गृहपतिः ॥ ९६ ॥

**स्त्रीभगिनीदुहितृवनितानामित्थीबहिणीधूआविलआः ॥ ९७ ॥**

स्त्रीप्रभृतीनामित्थीप्रभृतय आदेशा यथासंख्यं वा भवन्ति। इत्थी थी स्त्री। बहिणी भइणी भगिनी। धूआ दुहिआ दुहिता। विलआ वणिआ वनिता॥ विलयाशब्दः संस्कृतेऽपीति केचित् ॥९७॥

**उभयाधसोरवहहेट्ठौ ॥ ९८ ॥**

उभय अधस् इत्येतयोर्यथासंख्यं अवह हेट्ठ इत्यादेशौ वा भवतः। अवहं॥उहअं इत्यपि केचित्। हेट्ठं अह। हेट्ठमग्गो अहमग्गो अधोमार्गः॥९८॥

**मलिनधृतिपूर्ववैडूर्याणां मइलदिहिपुरिमवेरुलिआः ॥ ९९ ॥**

मलिनादीना मइलादय आदेशा यथासंख्यं वा भवन्ति। मइलं मलिणं मलिनम्। दिही धिई धृतिः। पुरिमं पुव्वं पूर्वम्। वेरुलिअं वेडुज्जं वैडूर्यम्॥ ९९ ॥

**स्मरकटोरीसरकारौ ॥ १०० ॥**

स्मरकटुशब्दयोरीसरकारौ यथासंख्यं वा भवतः। ईसरो सरो स्मरः। कारं कडू कटु ॥ १०० ॥

**बाहिंबाहिरौ बहिसः ॥ १०१ ॥**

बहिः शब्दस्य बाहिं बाहिर इत्यादेशौ वा भवतः। बाहिं बाहिरं। बाहिरब्भंन्तरकिरिआरोहो, बाह्याभ्यन्तरक्रियारोधः ॥ १०१ ॥

---

96. G गृहशब्दस्य for गृहस्य. BTom. वा. B om. भवति. 97. M om. the Sūtra. and Com. B °दूआ° for °धूआ in the Sūtra & Com. T om. वा. 98. G °हिट्ठौ for हेट्ठौ in the Sūtra. G हिट्ठ for हेट्ठ. K उभयं for उहअं. K अधस् हेट्ठं। अहमग्गो अधोमार्गः for हेट्ठं अह...अधोमार्गः. 99. G वैदूर्याणां in the Sūtra. B T °पूरिम° in the Sūtra and Com. G वैदूर्यम् for वैडूर्यम्. 101. B बहिषः for बहिसः in the Sūtra.

**क्रूरो गौणेषदः ॥ १०२॥**

ईषच्छब्दस्य गौणस्य कूर इत्यादेशौ वा भवति। चिञ्च व्व कूरपिक्का, चिञ्चेवेषत्पक्वा ॥ पक्षे ईसि ॥ १०२ ॥

**एण्हिं एत्ताहे इदानीमः ॥ १०३ ॥**

इदानीमित्यस्य एण्हिं एत्ताहे इत्यादेशौ वा भवतः। एण्हिं एत्ताहे इआणिं। पक्षे दाणिं ॥ १०३ ॥

**तिर्यक्पदातिशुक्तेस्तिरिच्छि पाइक्क सिप्पी ॥ १०४ ॥**

तिर्यगादेस्तिरिच्छादिरादेशो भवति। तिरिच्छि पेच्छइ, तिर्यक् पश्यति। पाइक्को पआई पदातिः। सिप्पी सुत्ती शुक्तिः ॥ १०४ ॥

**गोणाद्याः ॥ १०५ ॥**

गोणादयःशब्दा अनुक्तप्रकृतिप्रत्ययलोपागमवर्णविकारा बहुलं निपात्यन्ते। (१) गोणो गौः। स्वार्थे णः ॥ (२) गोला गोदा। गोदेति गोदावरी। दस्य लः। गोला संस्कृतेऽपीति केचित् ॥ (३) ओसायणं आपोशनम्। आपो इत्यस्य ओसा इत्यादेशः, ततः सकारात्परो यकारागमः। ओसाशब्दो नीहारवाची देश्यः, तत्कणो वा ओसायणं ॥ (४) वणाई वनराजिः। रेफस्य लुक् ॥ (५) तल्लडं तल्लं तल्पम्। लद्वित्वपलोपौ स्वार्थे डो वा। द्वित्वाभावे तलं ॥ (६) थोवो (७) थेवो थोक्को स्तोकः। कस्य वत्वम्, ओत एत्वं च वा, सेवादिपाठाद् द्वित्वम् ॥ (८) विरुअं विरुद्धम्। संयुक्तस्य लुक् ॥ (९) आओ आपः। शरदादिपाठादन्त्यस्य हलोऽत्व दीर्घश्च ॥

---

102. T गौणेषत for गौणेषदः in the Sūtra. S om. वा. B कूरपक्का for °पिक्का. 103. K om. वा. G T om. पक्षे दाणिं. B तिरच्छि°; S तिरिच्छ° in the Sūtra. B तिरच्छि for तिरिच्छि. 105, (1) HD. 2. 104. Gp T गोणा for गोणो. (2) HD. 2. 104. (3) HD. 1, 64. (ओसा) G ओसाअणमहीशाने, S ओसाआणं for ओसायणं आपोशनम्. (4) HD. 7. 38, (वणई). S om. वणाई वनराजिः, रेफस्य लुक्; G K M वणई वनराजि, रकारस्य लुक्. (5) HD. 5. 19 (तल). 5.54 (6) From Sk स्तोकः. (7) HD. 5.29. (8) HD. 7.63. (9) HD. 1.73.

(१०) गोसो गोसर्गः प्रत्यूषः। र्गस्य लुक्।। (११) वोसिरणं व्युत्सर्जनम्। व्युदो वो, सृजतीति जस्य र, सस्य ऋत इत्वं च।। (१२) धिरत्थु धिगस्तु। गस्य रः।। (१३) पत्थेवाअं पाथेयम्। थो द्वित्वं वकारागमश्च।। (१४) वेलंबो (१५) वडंबो विडम्बना। इत एत्, डो लः, नकारस्य लुक् च।। (१६) बुलुबुलो बुद्बुदः। दकारयोर्लः, संयुक्तयोर्मध्ये उत्वम्।। (१७) करिल्लं करीरम्। रस्य ल्ल.।। (१८) ऊआ यूका। यो लुक्।। (१९) दोग्गं युग्मम्। योर्दो।। (२०) धणिआ धन्या प्रियतमा। यकारात्पूर्वमित्वम्।। (२१) णिव्वहणं उद्वहनं विवाहः। उकारस्य णि.।। (२२) मुव्वहइ उद्वहति। उकारस्य मु.।। (२३) छिच्छि धिक्धिक्। धस्य छः।। (२४) वाडी वृतिः। ऋत आत्वं तकारस्य उत्वम्।। (२५) गहिल्लो ग्रहिलः। लो द्वित्वम्।। (२६) गोणिक्को गोनीकः गवामनीकः समूहः। को द्वित्वम्।। (२७) अइरजुवई आचिरयुवतिः। अपूर्वेत्यर्थः।। (२८) अणरहू नववधूः। नकारवकारयोरत्वणत्वे वस्य च र।। (२९) असआ असुरा। सुकाररेफयोर्मयौ।। (३०) पण्णवण्णा (३१) पञ्चावण्णा पञ्चपञ्चाशत्। स्तोरादेर्णः, पस्य वः, चाशतोर्णा। द्वितीयस्यात आ, चाशतोर्णा।। (३२) गामहणं ग्रामस्थानम्। स्थाकारस्य हः।। (३३) तेवण्णा त्रिपञ्चाशत्। इत एत्वं, चाशतोर्णः।। (३४) घुसिमं घुसृणम्। णो मः, ऋकारस्य इत्वम्।।

---

(10) HD. 2,96. After गोसो B adds गोस्पर्शः. (11) From Sk व्युत्सर्जनम्. K ओसिरणं for वोसिरणं. After व्युत्सर्जनम् S adds भाअं भालं लस्य यः. (12) From Sk धिगस्तु. (13) Sk पाथेयम्. (14) HD. 7.95 (15) HD, 7.95. (16) HD. 6.95 (बुलुंबुला). (17) Sk करीर. BT किरल्लं for करिल्लं. (18) HD. 1.139. (19) HD. 5.49. (20) HD. 5.58. K यात्पूर्वमित्वं for यकारात्पूर्वमित्वम्. (21) HD. 4.39. (22) Sk उद्वहति. (23) Sk धिक्-धिक्. (24) HD. 7.43. (25) Sk ग्रहिलः. (26) HD. 2.97. (गोणिक्को). (27) HD. 1.48. (28) HD. 1.48. (अणुवहुआ). (29) HD. 1.15. (30) HD. 6.27. (31) Sk पञ्चपञ्चाशत्. (32) HD. 2.90. (33) Sk त्रिपञ्चाशत्. (34) Sk घुसृणं.

(३५) छड्डा छटा। टकारस्य ड्डः ॥ (३६) बइल्लो बलीवर्दः। दोर्लः, लीवयोरित्वम्॥ (३७) पाउरणं (३८) पंगुरणं प्रावरणम्। द्वितीयस्यात उः, वस्य गुरादेशः॥ (३९) लक्कुडो लगुडः। गकारस्य क्कः॥ (४०) आसंघो आस्था। स्थाकारस्य संघः॥ (४१) छेणो स्तेनः। स्तोश्छः॥ (४२) दोसिणी ज्योत्स्ना ज्योर्दो, नात्पूर्वमित्वम्॥ (४३) हिज्जो ह्यः। यकारस्य इज्जः॥ (४४) कक्खडो कर्कशः। कशोः खडौ॥ (४५) तेआलीसा त्रिचत्वारिंशत्। इत ए, चत्वयोरा, रो लः, विंशत्यादिपाठाद्बिन्दोर्लुक्॥ (४६) कत्तं कलत्रम्। लस्य साचो लुक्॥ (४७) कलवू अलाबूः। अकारस्य कः आकारस्य अः॥ (४८) नलिअं (४९) निहेलणं निलयः। इदतोर्व्यत्ययः, यो णः, लात्पूर्वं हे॥ (५०) णिक्कडो निश्चयः। श्चयोः कडौ॥ (५१) णिक्कडो निश्चलः। चलोः कडौ॥ (५२) णिरासो नृशंसः। शंकारस्य रा॥ (५३) णिप्फंसो निस्त्रिंशः। स्त्रिकारस्य फः॥ (५४) विहुंडुओ विधुंतुदः। तो डः॥ (५५) वहिओ मथितः। मो वः॥ (५६) खड्डं खेलम्। लो ड्डः॥ (५७) कोलीरं कुरुविन्दम्। पद्मरागविशेषः। उकारयोरोदितौ, रो लः, बिन्दोश्च रः॥ (५८) विसग्गो व्युत्सर्गः। व्युदोः विः॥ (५९) संघयण संहननम्। हस्य घः, आदेर्नो यः॥ (६०) घायणो गायनः। गो घः॥ (६१) ढेक्कुणो मत्कुणः। मतोः ढे॥ (६२) ककुडं ककुदम्। दो डः॥ (६३) सेवालं जम्बालम्। जमोः से॥

---

(35) Sk छटा. (36) HD 6.91. (37) HD. 6.43. (पाउरणी). BT₁ पागुरणं; MT₃ पग्गुरणं for पंगुरण. (38) HD. 6.43. (39) HD. 7.19. (40) Sk आस्था. (41) Sk स्तेनः G चेणो, K थोणी for छेणो. (42) HD. 5.50. S om. दोसिणी; K जोसिणी. (43)? S om. हिज्जा इज्जा. (44) HD. 2.11. (45) Sk त्रिचत्वारिंशत्. (46) Sk कलत्रम्. (47)? Sk अलाबू. (48) HD. 4.20. (49) HD. 4.51. (50) HD. 4.29. (51) Sk निश्चलः. (52) HD. (णिराहो) 4.37. (53) Sk निस्त्रिंशः or निःस्पर्शः (54) HD. (विहुंडुओ) 7.65. (55) Sk मथितः. (56) Sk क्रीडा. (57) HD. (कोलीरं) 2.46. B कुरुविन्दः for कुरुविन्दम्. (58) Sk व्युत्सर्गः. (59) HD. 8.14. (60) HD. 2.108. (61) HD. (ढेंकुणो) 4.14. G ढेंकुणो. (62) Sk ककुदम्. (63) HD. 8.43.

(६४) खुड्डओ क्षुल्लकः। लो ड॰ ॥ (६५) वड्डुअरो बृहत्तरः। बृहदित्यस्य वड्डु ॥ (६६) अत्थक्कं अकाण्डम्। काण्डयो॰ त्थक्कौ ॥ (६७) आणुअं आननम्। आदेरत उः, द्वितीयस्य नो लुक् ॥ (६८) संगोलं संघात.। घातयोर्गोलः ॥ (६९) सामरी (७०) सामली शाल्मलिः। लो लुक् द्वित्वाभावश्च ॥ (७१) हिमोरं हिमोदरम्। दो लुक् ॥ (७२) अब्बा अम्बा। बिन्दोर्लुक् बो द्वित्वं च ॥ (७३) सिप्पी सूची। ऊत इः, चस्य द्विरुक्तः पः ॥ (७४) बम्ही वाणी। णो म्हः ॥ (७५) जच्छन्दो स्वच्छन्दः। स्वस्य जः॥ (७६) तलारो नलवरः पुराध्यक्षः। वस्य लुक् ॥ (७७) कुड्डं कुतुकम्। नोर्लुक्, कस्य डो द्विरुक्तः ॥ (७८) सीसक्कं शिर.पत्रम्। पत्रस्य क्कः ॥ (७९) जम्बालं शैवालम्। शै इत्यस्य जम् ॥ (८०) अणुदिवं दिनमुखम्। अनु पश्चात्, दिवा दिनम्। नो व॰ ॥ (८१) सत्थरो संस्तरः। बिन्दोर्लुक्। (८२) विड्डुरं विस्तार.। स्तकारस्य ड्डः ॥ (८३) वीली वीची (८४) वीबी च। चो लः, चो बः ॥ (८५) डंभिओ दाम्भिक.। दो डः ॥ (८६) कडप्पो कलापः समूहः। लो डः पो द्वित्वं च ॥ (८७) दूसलो दुर्भगः। भगोः सलौ ॥ (८८) गल्लं गण्डम्। डो ल्ल॰ ॥ (८९) पडिसिद्धी प्रतिस्पर्धा। स्पस्य सि आत ई ॥ (९०) वढो वटः। टो ढः ॥

---

(64) HD. (खुड्ड) 2.74. B कुड्डओ. (65) Sk बृहत्तरः. (66) HG. 2.174. (67) HD. 1.62. (68) HD. 8.4. G संगोल्ली.(69) HD. (सामरा) 8.23. (70) HD. 8.23. (71) Sk हिमोदरम्. (72) Sk अम्बा. (73) Sk सूची; S सिप्पी. (74) Sk ब्राह्मी. G वह्नि. (75) HD. 3.43. (76) HD. (तलारो). 5.3. (77) HD. 2.33. BT कुट्टं for कुड्ड. (78) HD. 8.34.S om. सीसक्कं...क्कः. (79) HD 3.12.(80) HD. 1.19. S om. from अणुदिव down to चेर्थः under 94. (81) HD. 8.4. (82) Sk विस्तरः. (83). (84) Sk वीची. (85) HD. 4.8. (86) HD. 2.13. (87) HD. 5.43. (88) Sk गण्डः. (89) HD. 6.77 (90) Sk मूढः ?

(९१) डोअणो (९२) डोअलो (९३) डोलो लोचनम्। लो डः,लनोर्डलौ, अत्रैव चस्य साचो लुक्।। (९४) कत्थइ क्वचित्। चेर्थः ।।(९५) डेड्डुरो दर्दुरः। अत ए, दकारयोर्डः।। (९६) छिल्लं छिद्रम्। द्रो ल्लः।। (९७) मंजरो (९८) वजरो मार्जारः । मो वो वा, वक्रादिपाठादनुस्वारः, आतो ह्रस्वः ।। (९९) गहरो गृध्रः। रात्पूर्वमत्।। (१००) उरओ(१०१) अज्जमो ऋजुः। जो र, ऋकारोकारयोरत्, स्वार्थे मश्च।। (१०२) साइआ सारिआ शारिका। रेर्लुक्, अन्त्यस्य आत इआ।। (१०३) अरणी सराणिः। सो लुक्।। (१०४) तणेसी तृणराशिः। राकारस्य पूर्वेणाचा सह एत्वम्।। (१०५) दुग्गं दुःखम्। स्तोर्गः।। (१०६) चउक्कं चतुष्पथम्। पथस्य क्कः।। (१०७) कलेरं रलयोर्व्यत्ययः, आत एत्वं च।। (१०८) कक्कालं कङ्कालश्च।। इत्यादि।। १०५।।

इति श्रीमदर्हनन्दित्रैविद्यदेवश्रुतधरश्रीपादप्रसादासादितसमस्तविद्याप्रभाव-
श्रीमत्त्रिविक्रमदेवविरचितप्राकृतव्याकरणवृत्तौ
प्रथमाध्यायस्य तृतीयः पादः।।

---

(91) HD. 4.9. (92) HD. 4.9. (93) HD. 4.11. (94) Sk क्वाचित्. (95) HD. 4.9. (96) HD. 3.35. S छल्लं for छिल्ल. (97) (98) Sk मार्जारः. (99) HD. 2.84. $T_3$ ends here. (100) (101) Sk ऋजुः. (102) Sk सारिका. (103) Sk सरणिः. (104) HD. 5.3. (105) HD. 5.53. (106) HD. 3.2. (107) HD. 2.53. (108) Sk कङ्कालः. BT कक्काल. Colophon: B om. from. मदर्ह° down to श्री°; S श्रीत्रिविक्रमदेवविरचिते प्राकृतव्याकरणे वृत्तौ. M T इति प्रथमाध्यायस्य तृतीयः पादः.

## चतुर्थः पादः ॥

**स्तोः ॥ १ ॥**

अधिकारोऽयम् 'ईल् ज्यायाम्' [१·४·११०] इति यावत् । यदित ऊर्ध्वमनुक्रमिष्यते तत् स्तोः संयुक्तस्य भवतीति वेदितव्यम् ॥ १ ॥

**वा रक्ते गः ॥ २ ॥**

रक्ते स्तोः संयुक्तस्य ग इत्यादेशो वा भवति । रग्गो रत्तो ॥ २ ॥

**शुल्के ङ्गः ॥ ३ ॥**

शुल्के संयुक्तस्य ङ्ग इत्यादेशो वा भवति । सुङ्गं सुक्कं ॥ ३ ॥

**कः शक्तमुक्तदष्टमृदुत्वरुग्णेषु ॥ ४ ॥**

एषु स्तोः ककारो वा भवति । सक्को सत्तो । मुक्को मुत्तो । डक्को दट्ठो । माउक्कं मउक्कं माउत्तणं । लुक्को लुग्गो ॥ ४ ॥

**क्ष्वेडकगे खल् ॥ ५ ॥**

क्ष्वेडकादिषु संयुक्तस्य खकारो भवति । लित्वान्न विकल्पः । क्ष्वेडकः खेडओ ॥ क्ष्वेडको विषपर्यायः ॥ स्फोटकः खोडओ । स्फोटिका खोडिआ॥ ॥ ५ ॥

---

1. M अनुक्रमिष्याम for °क्रमिष्यते. 2. M om. स्तोः GK गकारो वा भवति; M गकारो वा स्यात् for ग इत्यादेशो वा भवति. 3. M शुष्के गः for the Sūtra. Bp $T_2$ शुष्के for शुल्के in the Sūtra. Before शुल्के GK read वेत्युनुवर्तते; M reads वेत्युनुवृत्तिः. After सुङ्गं G adds पक्षे. M सुग्गं for सुङ्गं. 4. M स्यात् for भवति. BKM om. मउक्कं. G मउत्तणं, K माउत्तं for माउत्तणं. M माइक्क; T माउक्को for माउक्कं. Gp रुक्को रुग्गो; K om. लुग्गो. 5. GM क्ष्वेटकगे in the Sūtra. GM क्ष्वेटकादिषु for क्ष्वेडकादिषु. BT लित्त्वान्नित्यम् for लित्वान्न विकल्पः. GM क्ष्वेटकः; T क्ष्वेळकः for क्ष्वेडकः. After पर्यायः G adds स्फोटकः खोडिओ । क्ष्वेटकः खोडओ । स्फेटकः खेडओ. M खोडिओ, T खोडिओ for खेडओ. GMT om. स्फोटिका खोडिआ.

**ष्कस्कोर्नाम्नि ॥ ६ ॥**

ख इत्यनुवर्तते । ष्क स्क इत्येतयोर्नाम्नि संज्ञाया खो भवति । पुष्करम् पोक्खरं । पुष्करिणी पोक्खरिणी । निष्कम् णिक्खं । स्कन्धः खन्धो । स्कन्धावारः खन्धावारो । अवस्कन्दः अवक्खन्दो ॥ नाम्नीति किम् । दुक्करं दुष्करम् । णिक्कम्पं निष्कम्पम् । णमोक्कारो नमस्कारः । सक्कअ संस्कृतम् । सक्कारो संस्कारः ॥६॥

**वृक्षे रुर्वृक्षे ॥ ७ ॥**

वृक्षशब्दे संयुक्तस्य खो भवति, तत्संनियोगेन वृकारस्य च रुकारः । रुक्खो ॥ स्पृहादित्वाच्छत्वे वच्छो ॥ ७ ॥

**क्षः ॥ ८ ॥**

क्षकारस्य खो भवति । लक्षणम् लक्खणं । क्षयः खओ । विचक्षणः विअक्खणो ॥ बहुलाधिकारात्कचिच्छझावपि । खीणं छीणं झीणं क्षीणम् । छिज्जइ झिज्जइ क्षीयते ॥ ८ ॥

**स्थाणावहरे ॥ ९ ॥**

स्थाणुशब्दे स्तोः खो भवति अहरे हरश्चेद्वाच्यो न भवति । खाणू ॥ अहर इति किम् । थाणू ॥ ९ ॥

**स्कन्दतीक्ष्णशुष्के तु खोः ॥१०॥**

एषु खोरादेः संयुक्तस्य खो भवति तु । खन्दो कन्दो । तिक्खं तिण्हं। सुक्खं सुक्कं ॥ १० ॥

---

6. Before ख M reads वेत्यनुवृत्तिः. M ष्कस्कयोः for ष्क स्क इत्येतयोः. M स्यात् for भवति. B णिक्कं for णिक्ख. B कंधो for खन्धो. K अवखदो for अवक्खन्दो. T णिक्कंपो निष्कम्पः for णिक्कम्प निष्कम्पम्. M संकरो for सक्कारो. 7. M स्तोः for सयुक्तस्य. KS °योगाद् ; MT °योगे for °योगेन. M om. स्पृहादित्वाच्छत्वे वच्छो. 8. BT क्षस्य for क्षकारस्य. M स्यात् for भवति. G छडावपि, K कचिच्छकारोपि; M सछावपि for छझावपि. K छणं खणं for क्षयः खओ. G डीणं for झीण. G डिज्जइ for झिज्जइ. M शणं हीणं झण्णं खीण । क्षीयते झिज्जइ for खीणं ... क्षीयते. 9. M स्यात् for भवति. 10. S om. from Sūtra 10 down to Sūtra. 22. KM एष्वादेः for एषु खोरादेः. M स्यात् for भवति.

**स्तम्भे ॥ ११ ॥**

खोरित्यनुवर्तते त्विति च । स्तम्भे खो. संयुक्तस्य खकारो भवति तु । खम्भो थम्भो । काष्ठादिमयः ॥ योगविभाग उत्तरार्थः ॥११॥

**थलस्पन्दे ॥ १२ ॥**

स्पन्दाभाववृत्तौ स्तम्भे आदेः संयुक्तस्य थो लिद् भवति । थम्भो । थम्भिज्जइ ॥१२॥

**स्त्यानचतुर्थे च तु ठः ॥ १३ ॥**

स्त्यानचतुर्थयोश्चकारादस्पन्दवृत्तौ स्तम्भे च ठत्वं भवति तु । ठीणं थीणं । चउट्ठो चउत्थो । ठम्भो । ठम्भिज्जइ ॥१३॥

**ष्टः ॥ १४ ॥**

ठ इत्यनुवर्तते । ष्टस्य ठो भवति । योगविभागान्नित्यम् । दृष्टिः दिट्ठी । मुष्टिः मुट्ठी । यष्टिः लट्ठी । सौराष्ट्रम् सोरट्ठं ॥१४॥

**विसंस्थुलास्थ्यधनार्थे ॥ १५ ॥**

विसंस्थुलास्थिशब्दयोरधनवाचिन्यर्थशब्दे च संयुक्तस्य ठो भवति । विसंठुलं विसंस्थुलम् । अट्ठी अस्थि । अट्ठो अर्थः प्रयोजनम् ॥ अधनार्थ इति किम् । अत्थो ॥१५॥

**चः कृत्तिचत्वरे ॥ १६ ॥**

कृत्तिचत्वरयोः संयुक्तस्य चो भवति । किच्ची कृत्तिः । चच्चरं चत्वरम् । ॥१६॥

---

11. M इत्यनुवृत्तिः for इत्यनुवर्तते. After स्तम्भे in Com. K M add आदेः. M om. खोः. K खो for खकारो. M खस्तु स्यात् for खकारो भवति तु. 12. GMT स्थोस्पन्दे for the Sūtra. M om. स्पन्दाभाववृत्तौ स्तम्भे. $T_2$ स्पन्दवृत्तौ for स्पन्दाभाववृत्तौ. GMT थकारो for थो. K om. लित्. 13. K अनयोः for स्त्यानचतुर्थयोः. M तु स्यात् for भवति तु. K ठाणं थाणं for ठीण थीण. 14. M अनुवृत्तिः for अनुवर्तते. M स्यात् for भवति. K जट्ठी for लट्ठी. 15. $T_2$ अधन्य° for अधन°. M स्यात् for भवति. M om. अधन इति किम्. $GT_2$ अधनार्थे for अधने. 16. T om. कृत्तिचत्वरयोः. G कृत्तिचत्वरशब्दयोः, M अनयोः for कृत्तिचत्वरयोः.

**त्योऽचैत्ये ॥ १७ ॥**

चैत्यवर्जितस्य त्यस्य चो भवति । सत्यम् सच्चं । प्रत्ययः पच्चओ । अमात्यः अमच्चो ॥ अचैत्य इति किम् । चइत्तं ॥१७॥

**श्चेर्वृश्चिके ञ्चुर्वा ॥१८॥**

वृश्चिके श्चि इत्यस्य ञ्चु इत्ययमादेशो भवति। विञ्चुओ विच्छुओ॥१८॥

**उत्सवऋक्षोत्सुकसामर्थ्ये छो वा ॥१९॥**

एषु स्तोः छो वा भवति ॥ पुनर्वाग्रहणादुत्तरत्र न विकल्पः॥ उच्छओ ऊसओ । रिच्छो ,रिक्खो । उच्छुओ ऊसुओ । सामच्छं सामत्थं ॥१९॥

**क्षमायां कौ ॥ २० ॥**

छ इत्यनुवर्तते । कौ पृथिव्या वर्तमाने क्षमाशब्दे स्तोः छत्वं भवति । छमा ॥ लाक्षणिकस्यापि । छमा । काविति किम् । खमा क्षमा क्षान्तिः ॥२०॥

**क्षण उत्सवे ॥ २१ ॥**

उत्सववाचिनि क्षणशब्दे सयुक्तस्य छो भवति । छणो ॥ उत्सव इति किम् । खणो ॥२१॥

**स्पृहादौ ॥ २२ ॥**

स्पृहादिषु स्तो. छो भवति । छिहा स्पृहा । क्षुर· छुरो । क्षीरम् छीरं । वृक्षः वच्छा । क्षेत्रम् छेत्तं । वक्ष वच्छो। कुक्षिः कुच्छी । क्षुतम् छुअं । क्षतम् छअ । क्षुण्णम् छुण्ण । कक्ष्या कच्छा । कक्ष· कच्छो । माक्षिका माच्छिआ । क्षारम् छारं । इक्षु· उच्छू । सदृक्षः सारच्छा । अक्षि अच्छी । स्थगितः छइओ । दक्षः दच्छो । कौक्षेयकर्म् कुच्छेअअ । उक्षा उच्छा । सादृश्यम् सारिच्छं । क्षुधा छुहा । लक्ष्मीः लच्छी । लक्ष्म लच्छ । इत्यादि ॥२२॥

---

17. KMT चैत्यवर्जिते for °वर्जितस्य. M स्यान्नित्यम् for भवति. K om. अमात्यः अमच्चो. 18 M om. the Sūtra and Com. G विछिओ; T₂ विच्छिओ for विच्छुओ. K विछिओ विच्छुओ for विच्छुओ. 19. M om. the Sūtra and Com. GKT छत्व for छो 20. M अनुवृत्तिः for अनुवर्तते. M भूम्या for पृथिव्या. K छो for छत्व. M स्यात् for भवति. BGK om. क्षमा. K क्षान्तिरित्यर्थः for क्षान्तिः. 21. GM क्षणे for क्षणशब्दे. 22. T क्षुर छुर for क्षुरः छुरो. BT om. वक्षः वच्छो. G छीअ for छुअ. G क्षुण्णो छुण्णो for क्षुण्ण छुण्ण. B कक्षा for कक्ष्या. BKT om. क्षतं छअ. K om. कक्षः कच्छो. BT इच्छू for उच्छू. GKM om. लक्ष्म लच्छं.

**थ्यश्चत्सप्सामनिश्चले ॥ २३ ॥**

अनिश्चले निश्चलवर्जिते थ्य श्च त्स प्स इत्येतेषां छो भवति । थ्य—पथ्यः पच्छो । मिथ्या मिच्छा॥ श्च—पश्चिमं पच्छिमम्। आश्चर्यम् अच्छेरं । पश्चात् पच्छा॥ त्स—उत्साहः उच्छाहो । मत्सरः मच्छरो । संवत्सरः संवच्छलो । चिकित्सति चिइच्छइ ॥ प्स—अप्सरसः अच्छरा । लिप्सते लिच्छइ । जुगुप्सति जुउच्छइ ॥ अनिश्चल इति किम् । णिच्चलो ॥२३॥

**द्यय्यर्यां जः ॥ २४ ॥**

एषा जकारो भवति । द्य—मद्यम् मज्जं । अवद्यम् अवज्जं । आतोद्यम् आओज्जं । द्युतिः जुई । द्योत. जोओ ॥ य्य—शय्या सेज्जा । जय्यः जज्जो । क्षय्यः खज्जो ॥ र्य—कार्यम् कज्ज । पर्याय· पज्जाओ । पर्याप्तम् पज्जत्तं ॥२४॥

**न्वभिमन्यौ जर्जौ ॥ २५ ॥**

अभिमन्यौ न्तोः जर् ज इत्येतौ तु भवतः । रित्त्वाद् द्वित्वम् । अहिमज्जू अहिमजू । पक्षे अहिवण्णू अहिमण्णू ॥२५॥

**ध्यह्योर्झल् ॥ २६ ॥**

ध्य ह्य इत्येतयोर्झत्वं भवति । लित्वान्नित्यम्। ध्य—ध्यानं झाणं । अध्ययनम् अज्झयणं । संध्या संझा। विन्ध्यः विञ्झा । उपाध्यायः उवज्झाओ ॥ ह्य—सह्य· सज्झो । गुह्यम् गुज्झं । ग्राह्यम् गेज्झं । नह्यते णज्झइ ॥२६॥

**साध्वसे ॥ २७ ॥**

साध्वसे ध्वोर्झो भवति । सज्झसं ॥२७॥

---

23. B om. अनिश्चले in the Com. M om. पथ्यः पच्छो. GT पथ्य पच्छं for पथ्यः पच्छो. After पच्छो GKM add पथ्या पच्छा. KT मच्छलो for मच्छरो. G om. सवत्सरः संवच्छलो. After सवच्छलो G adds चिकित्सा चिइच्छा. KT जुगुप्सते for °प्सति. 24. K द्य य्य र्य इत्येतेषा for एषा. M जः for जकारः. GT om. आतोद्यम् आओज्जं. GKMT om. क्षय्यः खज्जो. B कच्चं for कज्जं. 25. K जज्जो, MT जर्जा for जर्जौ in the Sūtra. K जज्जौ; MT अर्जा for जर् ज इत्येतौ. BKMT om. रित्वाद् द्वित्वम्. G MT om. अहिवण्णू, 26. M स्यात् for भवति. M om. लित्वान्नित्यम्. GK लित्वान्न विकल्पः GK om. अध्ययनम् अज्झयणं. 27. Before साध्वसे in the Com. M reads ह्य इति वर्तते. G साध्वसशब्दे for साध्वसे. M स्यात् for भवति. GMT सज्झसो for सज्झसं.

**ध्वजे वा ॥ २८ ॥**

ध्वजे स्तोर्झो वा भवति । झओ धओ ध्वज ॥२८॥

**इन्धौ ॥ २९ ॥**

इन्धी दीप्तावित्यस्मिन्धातौ स्नोर्झ इत्यादेशो भवति । समिध्यति समिज्झइ ॥ २९ ॥

**र्तस्याधूर्तादौ टः ॥ ३० ॥**

र्तस्य टो भवति अधूर्तादौ धूर्तादीन्वर्जयित्वा । कैवर्तः केवट्टो । वर्तिः वट्टी । वर्तुलम् वट्टुलं । संवर्तितः संवट्टिओ । प्रवर्तते पअट्टइ । नर्तयति णट्टइ ॥अधूर्तादाविति किम् । धूर्तः धुत्तो । वार्ता वत्ता । आर्तिः अत्ती । संवर्तनम् संवत्तणं । विवर्तनम् विवत्तणं । प्रवर्तनम् पवत्तणं । आवर्तनम् आवत्तणं । मुहूर्तः मुहुत्तो मूर्तः मुत्तो । आवर्तकः आवत्तओ । संवर्तकः संवत्तओ । वार्तिकः वत्तिओ । वर्तिका वत्तिआ । प्रवर्तक. पवत्तओ । मूर्तिः मुत्ती । उत्कीर्तितः उक्कित्तिओ । निवर्तकः णिवत्तओ । निर्वर्तकः णिव्वत्तिओ । कीर्ति. कित्ती । कार्तिकः कत्तिओ ॥ बहुलाधिकारात्—वार्ता वट्टा ॥ ३० ॥

**प्रवृत्तसंदष्टमृत्तिवृत्तेष्टापत्तनकदर्थितोष्ट्रे ॥ ३१ ॥**

एषु स्तोः टत्वं भवति । प्रवृत्तः पवट्टो । संदष्टः संदट्टो । मृत्तिः मट्टी । वृत्तं वट्टं । इष्टा इट्टा । पत्तन पट्टणं । कदर्थितः कवट्टिओ । उष्ट्रः उट्टो ॥ संदष्टोष्ट्रे तु ठत्वापवादः ॥ ३१ ॥

---

28. M स्यात्तु for वा भवति. M om. ध्वजः 29. M om. अस्मिन्; G एतस्मिन् for अस्मिन्. After आदेशो G adds वा. M स्यात् for भवति. GMT समिज्झाइ for समिज्झइ. G समिध्यते. After समिध्यति BK add विज्झइ विध्यते, MT add विज्झाइ. 30. S तस्या° for र्तस्या° in the Sūtra. M om. टः in the Sūtra. M ढः स्यात् for टो भवति. M धूर्तादिवर्जं for अधूर्तादौ, धूर्तादीन् वर्जयित्वा. GK पवट्टइ for पअट्टइ. KMS om. आर्तिः अत्ती. KMS om. प्रवर्तनम् पवत्तणं. GKM मूर्तम् मुत्त for मूर्तः मुत्तो. KMS om. वत्तिओ वार्तिकः. After कार्तिक GKM add इत्यादि. 31. M स्यात् for भवति. KMT कअट्टिओ for कवट्टिओ.

**वा न्तन्धौ मन्युचिह्नयोः ॥ ३२ ॥**

अनयोः संयुक्तयोर्यथासंख्य न्त न्ध इत्येतावादेशौ वा भवतः। मन्तू मण्णू। इन्धं चिण्हं॥ ३२॥

**डल्फोर्मर्दितविच्छर्दच्छर्दिकपर्दवितर्दिगर्तसंमर्दे ॥ ३३ ॥**

एषु फोर्द्वितीयस्य स्तोः संयुक्तस्य डत्व लिद्भवति। मर्दितः मड्डिओ। विच्छर्दः विच्छड्डो छर्दिः छड्डी। कपर्दः कवड्डो। वितर्दिः विअड्डी। गर्तः गड्डो। संमर्दः संमड्डो॥ ३३॥

**ढोऽर्धर्द्धिश्रद्धामूर्ध्नि तु ॥ ३४ ॥**

फोरित्यनुवर्तते। एषु स्तोर्द्वितीयस्य ढो भवति तु। अर्धम् अड्ढं अद्धं। ऋद्धिः इड्ढी इद्धी। श्रद्धा सड्ढा सद्धा। मूर्धा मुड्ढा मुद्धा॥ ३४॥

**दग्धविदग्धवृद्धिदंष्ट्रावृद्धे ॥ ३५ ॥**

एषु संयुक्तस्य ढो भवति। पृथग्योगान्नित्यम्। दग्धः दड्ढो। विदग्धः विअड्ढो। वृद्धिः वुड्ढी। दष्ट्रा दाढा। वृद्धः वुड्ढो॥ क्वचिन्न। विद्धकइणिरूविअं, वृद्धकविनिरूपितम्॥ ३५॥

**पञ्चदशदत्तपञ्चाशति णः ॥ ३६ ॥**

एषु स्तोर्णत्वं भवाति। पञ्चदश पण्णरह। दत्तं दिण्ण। पञ्चाशत् पण्णासा॥ ३६॥

---

32. M इत्येतौ स्याताम् for इत्येतावादेशौ वा भवतः. After मण्णू G adds चिन्ध. After इन्ध K adds इण्ह. 33. S दल्पो° for डल्फो° in the Sūtra. S विदर्ध° for °विच्छर्द° in the Sūtra. M om. °छर्दि° in the Sūtra. S °कपर्दि° for °कपर्द° in the Sūtra. S पोः for फोः. M om. ल्ति. S विदर्धः विदंडो for विच्छर्दः विच्छड्डो. S कपड्डो for कवड्डो. 34. G वर्तते; M अनुवृत्तिः for अनुवर्तते. S ठो for ढो. M स्यात् for भवति तु. S अट्टो for अड्ढ. G रिद्धी for इड्ढी. 35. M स्यान्नित्य for भवति. M om. पृथग्योगान्नित्यम्, GK °योगान्न विकल्पः. K om. Sk equivalents under this Sūtra. S क्वचित् for क्वचिन्न. T om. क्वचिन्न विद्ध...निरूपितम्. 36. GS णकारो; M णः for णत्वं. M स्यात् for भवति. M पण्णाओ for पण्णासा.

**ज्ञम्नोः ॥ ३७ ॥**

ज्ञ म्न इत्येतयोर्णत्वं भवति । ज्ञानम् णाणं । संज्ञा संणा । विज्ञानम् विण्णाणं ॥ निम्नम् णिण्णं। प्रद्युम्नः पज्जुण्णो ॥ ३७ ॥

**स्तवे थो वा ॥ ३८ ॥**

स्तवे संयुक्तस्य थो वा भवति । थवो तवो ॥ ३८ ॥

**रो हश्चोत्साहे ॥ ३९ ॥**

थ इति वर्तते वेति च । उत्साहे सयुक्तस्य थो वा भवति तत्संनियोगेन हस्य च रेफः । उत्थारो उच्छाहो ॥ ३९ ॥

**स्तः ॥ ४० ॥**

स्तस्य थकारो भवति । हस्तः हत्थो । स्तुति थुई । स्तोकम् थोअं । प्रस्तरः पत्थरो । स्वस्ति सत्थि ॥ ४० ॥

**पर्यस्ते टश्च ॥ ४१ ॥**

पर्यस्ते स्तस्य टो भवति । चकारात् थश्च । पल्लट्टो पल्लत्थो ॥ ४१ ॥

**वात्मभस्मनि पः ॥ ४२ ॥**

आत्मभस्मनोः स्नोः पो वा भवति । अप्पा अप्पाणो । अत्ता अत्ताणो ॥ भप्पो भस्सो ॥ ४२ ॥

**ड्मक्मोः ॥ ४३ ॥**

ड्म क्म इत्येतयोः पो भवति । कुड्मलं कुप्पलं । रुक्मिणी रुप्पिणी ॥ क्वचिद् मोऽपि । रुक्मी रुम्मी रुप्पी ॥ ४३ ॥

---

37. M स्यात् for भवति. M om. विज्ञानम् विण्णाणं. M om. प्रद्युम्नः पज्जुण्णो. 38. S थओ for थवो Gp S om. तवो. 39. GKS अनुवर्तते; M अनुवृत्तिः for वर्तते. M स्याद्वा for वा भवति. M तत्संनियोगे. GM रः for रेफः. T उड्ढारो for उत्थारो. 40. S स्तकारस्य for स्तस्य.M थः स्यात् for थकारो भवति. KS पत्थारो प्रस्तारःfor प्रस्तरः पत्थरो. 41. S तश्च for टश्च in the Sūtra. M स्यात् for भवति. M om. पल्लत्थो. 42. S om. वा in the Sūtra and Com. G आत्म भस्म इत्येतयोः for आत्मभस्मनोः. G अप्पाणो. M om. अत्ताणो. G अत्तणो,M om.अत्ताणो.43. G ट्मक्मोः, T ग्मक्मोः for the Sūtra. M अनयोः for ड्म क्म इत्येतयोः. G कुट्मलं कुपलं for कुड्मलम् कुप्पलं. T गोपि for मोऽपि. G रुम्म रुप्पं रुक्मम्; M रुग्मं रुप्पं रुप्पी; T रुग्गं रुप्पं for रुम्मी रुप्पी रुक्मी.

**ष्पस्पोः फः ॥ ४४ ॥**

ष्प स्प इत्येतयोः फो भवति । ष्प—पुष्प पुप्फं । शष्प सप्फं । निष्पावः णिप्फावो । निष्पेपः णिप्फेसो ॥ स्प—स्पन्दनम् फन्दणं । प्रतिस्पर्धी पडिप्फद्धी ॥ ४४ ॥

**भीष्मे ॥ ४५ ॥**

फ इत्यनुवर्तते । भीष्मे स्तोः फत्वं भवति । भिप्फो ॥४५॥

**श्लेष्मबृहस्पतौ तु फोः ॥४६॥**

अनयोः फोर्द्वितीयस्य संयुक्तस्य फो भवति तु । सेप्फो सेम्हो । बिहप्फई बहप्पई ॥ ४६ ॥

**ग्मो मः ॥ ४७ ॥**

ग्मस्य मो भवति तु । युग्मम् जुम्म जुग्ग । तिग्मम् तिग्गं तिम्मं ॥४७॥

**न्मः ॥ ४८ ॥**

न्मस्य मो भवति । पृथग्योगान्नित्यम् । जन्म जम्मो । मन्मथ वम्महो । मन्मनः मम्मणो ॥ ४८ ॥

**ताम्राम्रयोर्म्बः ॥४९॥**

अनयोः संयुक्तस्य मकाराक्रान्तो बकारो भवति । ताम्रम् तम्बं । आम्रम् अम्बं ॥ तम्बिरं अम्बिरं इत्येतौ देश्यौ ॥४९॥

---

44. M फकारो for फो. G णिफ्फाओ for णिप्फावो. M णिप्फासो for णिप्फेसो. GT पाडिप्फद्धा, M पाडिप्पत्थी for पडिप्फद्धी. 45. GT om. फ इत्यनुवर्तते, M फानुवृत्तिः.M फः स्यात् for फत्वं भवति. M भिप्पो for भिप्फो. 46. S श्रेष्ठ° for श्लेष्म° in the Sūtra. M om. संयुक्तस्य. MS om. तु. B सेम्महो, G सिळेम्हो; MT सिलिम्हो for सेम्हो. GT बुहप्फई बुहस्सई; M बुहप्फई बुहप्पई for बिहप्फई बहप्पई. 47. M म· स्यात् for मो भवति तु. 48. K न्म इत्यस्य संयुक्तस्य म इत्यादेशः स्यान्नित्यम् for न्मस्य...न्नित्यम्. BK मम्महो for वम्महो. S om. मन्मनः मम्मणो. GM add मम्मणं. 49. M स्तोः for संयुक्तस्य. S मकारादेशो बो for मकाराक्रान्तो बकारो. GM बो for बकारो. B तंबीरं अंबीरं for तम्बिरं अम्बिरं.

**ऊर्ध्वे भो वा ॥ ५० ॥**

उर्ध्वे स्तोर्भो वा भवति । उब्भं उद्धं ॥ ५० ॥

**ह्वः ॥ ५१ ॥**

भो वेत्यनुवर्तते । ह्वस्य भो वा भवति । जिह्वा जिब्भा जीहा ॥५१॥

**वश्च विह्वले ॥ ५२ ॥**

विह्वले संयुक्तस्य वकारस्य भो वा भवति । विब्भलो विहलो ॥ ५२ ।

**काश्मीरे म्भः ॥ ५३ ॥**

काश्मीरे संयुक्तस्य म्भ इत्यादेशो भवति । कम्भारं कम्हारं ॥ ५३ ॥

**लो वार्द्रे ॥ ५४ ॥**

आर्द्रे स्तोर्लत्वं वा भवति । पुनर्वाग्रहणादुत्तरत्र न विकल्पः॥ अल्लं उल्लं ओल्लं । अद्दं उद्दं ओद्दं ॥ ५४ ॥

**र्यः सौकुमार्यपर्यस्तपर्याणे ॥ ५५ ॥**

एषु र्यस्य लो भवति । सौकुमार्यम् सोअमल्लं । पर्यस्तम् पल्लट्टं । पर्याणम् पल्लाणं ॥ पल्लङ्को इति तु पल्यङ्कस्य ॥ ५५ ॥

**अररीअरिज्जमाश्चर्ये ॥ ५६ ॥**

र्य इत्यनुवर्तते । आश्चर्ये र्यस्य अर रीअ रिज्ज इति त्रय आदेशा भवन्ति। अच्छअरं अच्छरीअं अच्छरिज्जं ॥ ५६ ॥

---

50. M ऊर्ध्वशब्दे संयुक्तस्य भकारो वा स्यात् for ऊर्ध्वे...भवति. 51. G भ इत्यनुवर्तते, M भानुवृत्तिः 52. BT भश्च for वश्च in the Sūtra. M स्तो· for सयुक्तस्य. MT om. वकारस्य; M वस्य. After वकारस्य GM add च. M स्यात् for भवति. M भिब्भलो for विब्भलो. B विह्वलो for विहलो. 53. MS म्हः for म्भः in the Sūtra. M स्तोः for संयुक्तस्य. M म्ह; S म for म्भ. After आदेशो GM add वा. M स्यात् for भवति. KS कम्हारो कम्मारो, M कम्हारा कम्मारा for कम्भारं कम्भार. 54. G आर्द्रशब्दे for आर्द्रे. M स्यात् for भवति. T om. उद्दं. 55. After सौकुमार्य KS add पर्यक in the Sūtra. M स्यात् for भवति. KS सोउमल्लं for सोअमल्लं. K पल्लत्थं corrected to पल्लट्टं. After पल्लट्टं KS add पल्लंकं. After पल्लट्टं MT add पल्लत्थं. 56. S अरिअरिज्जमाश्चर्ये for the Sūtra. BM रिअ; Bp रीय for रीअ in the Sūtra and Com. B om. र्य इत्यनुवर्तते. BT अच्चअर अच्चरिअं अच्चरिज्जं for अच्छअर...अच्छरिज्ज.

**डेरो ब्रह्मचर्यसौन्दर्ये च ॥५७॥**

ब्रह्मचर्यसौन्दर्ययोः चकारादाश्चर्ये च र्यस्य डित् एर इत्यादेशो भवति। बम्हचेरं। सुन्देरं। अच्छेरं॥ डित्त्वाट्टिलोप॥ चौर्यसमत्वात् [ १·४·१०० ] बह्मचरिअं। सुन्दरिअं। अच्छरिअं॥ ५७॥

**वा पर्यन्ते ॥५८॥**

पर्यन्ते र्यस्य डेरो वा भवति। पेरन्तो पज्जन्तो॥ ५८॥

**धैर्ये रः ॥ ५९ ॥**

वेत्यनुवर्तते। धैर्ये र्यस्य रो वा भवति। धीरं धिज्जं॥ ५९॥

**तूर्यदशार्हशौण्डीर्ये ॥ ६० ॥**

एषु स्तोः रो भवति। पृथग्योगान्नित्यम्॥ तूरं। दसारो। सोण्डीरं॥ ॥ ६०॥

**बाष्पे होऽश्रुणि ॥ ६१ ॥**

अश्रुवाचिनि बाष्पशब्दे स्तोर्हो भवति। बाहो नेत्रजलम्॥ अश्रुणीति किम्। बप्फो ऊष्मा॥ ६१॥

**कार्षापणे ॥ ६२ ॥**

कार्षापणे संयुक्तस्य हो भवति। काहावणो। कहावणो इ यत्र 'संयोगे' [१.२.४०] इति पूर्वमेव ह्रस्वः, पश्चादादेशः। अथवा कर्षापणशब्दात्सिद्धिः ॥ ६२॥

---

57. S ढेरो for डेरो. M om. चकारात् S बंहचेरं for बह्मचेरं BT अच्चेरं for अच्छर. S om. डित्त्वाट्टिलोपः. BT अच्चरिअ for अच्छरिअं. 59. KM om. वेत्यनुवर्तते. 60. K तूर्यादिषु for एषु S लो for रो. M om. पृथग्योगात्. After दसारो GM add देशः; T adds दाशार्हः. 61. K बाष्पे for अश्रुवाचिनि बाष्पशब्दे. T om. नेत्रजलम्. 62. B स्तोः for संयुक्तस्य. KMS कहापणो for काहावणो. After काहावणो B adds बहुलाधिकारात्कासावणो. S om. अथवा. M om. अथवा...सिद्धिः. After °शब्दात् KST add वा GT सिद्धः for सिद्धिः.

**न वा तीर्थदुःखदक्षिणदीर्घे ॥ ६३ ॥**

एषु संयुक्तस्य हत्वं न वा भवति । तूहं तित्थं । दुहं दुक्खं । दुहिओ दुक्खिओ । दाहिणो दक्खिणो । दीहो दीहरो दिग्घो ॥६३॥

**कूष्माण्ड्यां ण्डश्च तु लः ॥ ६४ ॥**

कूष्माण्डीशब्दे प्रथमस्य संयुक्तस्य हकारो भवति । ण्ड इत्यस्य लत्वं तु भवति । कोहली कोहण्डी । कोहली इत्यत्र 'संयोगे' [ १·२·४० ] इति प्रागेव ह्रस्वः पश्चाल्लत्वम् ॥ ६४ ॥

**त्वथ्वद्वध्वां क्वचिच्चछजझाः ॥ ६५ ॥**

त्व थ्व द्व ध्व इत्येतेषां यथासंख्यं च छ ज झ इत्येते क्वचित्प्रयोगानुसारेण भवन्ति । त्वस्य चः—भुक्त्वा भोच्चा । ज्ञात्वा णच्चा । श्रुत्वा सोच्चा ॥ थ्वस्य छ.—पृथ्वी पिच्छी ॥ द्वस्य जः— विद्वान् विज्जं ॥ ध्वस्य झः—ध्वनिः झुणी । बुद्ध्वा बुज्झा ॥ सअलपिच्छीविज्जं, सकलपृथ्वीविद्वान् ॥ ६५ ॥

**ह्लो ल्हः ॥ ६६ ॥**

ह्लकारस्य लकाराक्रान्तो हकारो भवति । कह्लारम् कल्हारं । प्रह्लादः पल्हादो ॥ ६६ ॥

**श्मष्मस्मह्मामस्मररश्मौ म्हः ॥ ६७ ॥**

श्म ष्म स्म ह्म इत्येतेषां म्ह इत्यादेशो भवति स्मररश्मिशब्दौ वर्जयित्वा । काश्मीरः कम्हारो । ग्रीष्मः गिम्हो । ऊष्मा उम्हा । विस्मयः विम्हओ ॥ अस्मादृशः अम्हारिसो। ब्रह्मा बम्हा । ब्रह्माणः बम्हाणो । ब्रह्मचर्यम् बम्हचेरं ॥ अस्मररश्माविति किम् । स्मरः सरो । रश्मिः रस्सी ॥ ६७ ॥

---

63. S om. न. KS तीहं; $T_1$ तुहं; $T_2$ तिहं for तूहं. T om. दिग्घ. 64. M लः for लत्वं. K S वा for तु. M om. कोहली इत्यत्र संयोगे इति. 65. S om. थ्व in the Sūtra. K S त्वादीनां; B एतेषा यथासंख्यं; M एतेषा चत्वार आदेशाः for त्व थ्व द्व ध्व इत्येतेषां; S om. श्रुत्वा सोच्चा. KS पुच्छी for पिच्छी. KS विज्जो for विज्जं. K बोज्झा for बुज्झा. 66. S कहलार for कल्हार. GKM पल्हाओ; S पहलाओ for पल्हादो. 67. M स्मररश्मिशब्दवर्जं for °शब्दौ वर्जयित्वा.KMS काश्मीराः कम्हारा for काश्मीरः कम्हारो. K बह्माणो for बह्मणो. S बंह्चेरं for बम्हचेरं. S रंसि for रस्सी.

**पक्ष्मणि ॥ ६८ ॥**

म्ह इत्यनुवर्तते । पक्ष्मशब्दे स्तोः म्ह इत्यादेशो भवति । पक्ष्माणि पम्हाइं ॥ पम्हललोअणो पक्ष्मललोचनः ॥ ६८ ॥

**श्नष्णस्नह्नह्णक्ष्णां ण्हः ॥ ६९ ॥**

एषा ण्ह इत्यादेशो भवति । श्न– प्रश्नः पण्हो । शिश्नः सिण्हो ॥ ष्ण–विष्णुः विण्हू । जिष्णुः जिण्हू । कृष्णः किण्हो । उष्णीषम् उण्हीसं ॥ स्न– स्नातः ण्हाओ । प्रस्नवः पण्हओ । ज्योत्स्ना जोण्हा ॥ ह्न–जह्नुः जण्हू ॥ ह्ण–पूर्वाह्णः पुव्वण्हो । अपराह्णः अवरण्हो ॥ क्ष्ण–श्लक्ष्णम् सण्हं । तीक्ष्णम् तिण्हं ॥ ६९ ॥

**सूक्ष्मे ॥ ७० ॥**

सूक्ष्मे संयुक्तस्य ण्हो भवति । सुण्हं । सण्हं ॥७०॥

**आश्लिष्टे लधौ ॥ ७१ ॥**

आश्लिष्टे संयुक्तयोर्यथासंख्यं लधौ भवतः । आलिद्धो ॥ ७१ ॥

**ठढौ स्तब्धे ॥ ७२ ॥**

स्तब्धे संयुक्तयोर्यथासंख्यं ठढौ भवतः । ठड्ढो ॥ ७२ ॥

**तो ढो रश्चारब्धे तु ॥ ७३ ॥**

आरब्धे स्तोः तकारो भवति तु, तत्संनियोगेन रस्य च ढः । आढत्तो आरद्धो ॥ ७३ ॥

**सो बृहस्पतिवनस्पत्योः ॥ ७४ ॥**

अनयोः संयुक्तस्य सकारो भवति तु । बहस्सई बहप्फई । बिहस्सई बिहप्फई । वणस्सई वणप्फई ॥ ७४ ॥

---

68. S om. म्ह इत्यनुवर्तते. S सयुक्तस्य for स्तोः. S म्हकारो for म्ह इत्यादेशो. 69. KS श्न इत्येतेषां for एषा. G वेण्हू for विण्हू. M om. from कृष्णः down to अवरण्हो. GK कण्हो, S किण्हू for किण्हो. T जण्णू for जण्हू. S om तीक्ष्णम् तिण्हं. 70. S om. the Sūtra and Com. BK om. सण्हं. 71. M लडौ in the Sūtra and Com. S आलंधो for आलिद्धो. 72. M om. यथासंख्य. 73. KS संयुक्तस्य for स्तोः. GMT तत्संनियोगे for °योगेन. 74. S om. the Sūtra and Com. M om. तु.T बुहस्सई for बहस्सई MST अहस्सई अहप्पई for बिहस्सई बिहप्फई,

**शोर्लुक्खोः स्तम्बसमस्तनिस्पृहपरस्परश्मशानश्मश्रौ ॥ ७५ ॥**

स्तम्बादिषु शोः शषसाना खोरादौ वर्तमानाना संयुक्तसंबन्धिनां लुग्भवति । तम्बो । समत्तो । निप्पिहो । परोप्परं । मसाणं । मंसू ॥७५॥

**श्चस्य हरिश्चन्द्रे ॥७६॥**

हरिश्चन्द्रे श्चस्य लुग्भवति । हरिअन्दो ॥७६॥

**कगटडतदप ᳵक ᳵपशोरुपर्यद्रे ॥७७॥**

क ग ट ड त द पाना जिह्वामूलीये पध्मनीययोः शो. शषसाना च संयुक्तसंबन्धिनामुपरिस्थिताना लुग्भवति अद्रे द्रकारं वर्जयित्वा । क—भुक्तम् भुत्तं। सिक्थम् सित्थं ॥ ग—दुग्धम् दुद्धं । मुग्धम् मुद्धं ॥ ट—षट्पद. छप्पओ । कट्फलम् कप्फलं ॥ ड—खड्ग खग्गो । षड्जः सज्जो ॥ त—उत्पलम् उप्पलं । उत्पातः उप्पाओ । द—मद्गुः मग्गू । मुद्गरः मोग्गरो । उद्विग्नः उव्विग्गो ॥ प—सुप्तः सुत्तो । गुप्तः गुत्तो ॥ ᳵक—दु खम् दुक्खं ॥ ᳵप—अन्त.पातः अन्तप्पाओ ॥ श—निश्चलः निच्चलो । श्लक्ष्णं लण्हं । श्च्योतति चुअइ ॥ ष—गोष्ठी गोट्ठी । षष्ठः छट्ठो ॥ स—स्खलितः खलिओ । स्नेहः णेहो ॥ अद्र इति किम् । समुद्रो । चन्द्रो । भद्रं ॥ अद्र इति निषेधोऽयं 'धात्रीद्रे रस्तु' [१·४·८०] इति विकल्पिते रेफलोपे प्राप्तो दकारलोपो मा भूदिति ॥७७॥

---

75. K परप्परो, S परप्पलो for परोप्परं. B मंसु; S मस्सू for मसू. 76. GK श्चकारस्य for श्चस्य. 77. B om. अद्रे S om. द्रकार वर्जयित्वा; K द्रकारमात्रवर्जिते सति, M द्र इत्यक्षरवर्जं; T द्रे न भवति. T om. सिक्थं सित्थं; M सिक्थः सित्थो. GMT मुग्धा मुद्धा for मुग्धम् मुद्धं. T उद्घातः for उत्पादः M मद्दल मद्दलो for मद्गुः मग्गू. T मुद्गरं मोग्गरं for मुद्गरः मोग्गरो. KMS om. उद्विग्न· उव्विग्गो. KMS om. गुप्तः गुत्तो. S संत पातः संतप्पाओ for अन्त पातः अन्तप्पाआ. BK समुद्दो चंदो भद्दं for समुद्रो चन्द्रो भद्रं. B रेफलोपेऽप्राप्ते; G रेफलोपे प्राप्तो; M रलोपे प्राप्तो; KT रलोपे प्राप्ते.

**लवरामवश्च ॥ ७८ ॥**

लवरा संयुक्तस्याधो वर्तमानाना चकारादुपरि स्थिताना च लुग्भवति । अधः । ल—श्लक्ष्णम् सण्हं । विक्लवः विक्कओ ॥ व—पक्वः पक्को । विध्वस्तः विद्धत्थो ॥ र—चक्रम् चक्कं । ग्रहः गहो । रात्रिः रत्ती ॥ उपरि । ल—उल्का उक्का । वल्कलम् वक्कलं ॥ व—शब्दः सद्दो । अब्दः अद्दो । लुब्धकः लुद्धओ ॥ र—अर्कः अक्को । तर्कः तक्को ॥७८॥

**मनयाम् ॥ ७९ ॥**

संयुक्तस्याधो वर्तमानाना मनया लुग्भवति । म—युग्मम् जुग्गं । रश्मिः रस्सी । स्मरः सरो ॥ न—नग्नः नग्गो । लग्नः लग्गो ॥ य—श्यामा सामा । कुड्यम् कुड्डं ॥ अत्र द्वितीयकल्मषमाल्यादिष्वेतत्सूत्रत्रयविधिप्राप्तौ यथादर्शनं लोपः । द्वितीयः बिइओ । द्विगुणः बिउणो । द्वादश बारह । द्वाविंशतिः बावीसा । द्वात्रिंशत् बत्तीसा । कल्मषम् कम्मसं । शुल्बम् सुब्बं ॥ क्वचित्तु अधः। द्विपः दिवो । द्वीपः दीवो । द्विजातिः दुआई । काव्यम् कव्वं । दिव्यम् दिव्वं । माल्यम् मल्लं । कुल्या कुल्ला ॥ क्वचित्पर्यायेण । उद्विग्नः उद्विग्गो उव्विण्णो ॥ रेफस्य तु सर्वत्रैव ॥ सव्व । वक्कं । चक्कं ॥ ‘ सर्वत्र लवरामचन्द्रे ’ [हे. २·७९] इति कश्चित् । तदयुक्तम् । चन्दो चन्द्रो इति स्वयमेवोदाहृतत्वात्तथाविधप्रयोगदर्शनाच्च उत्तरसूत्रोक्तविकल्प एवाभ्युपगन्तव्यः ॥७९॥

---

78. KS संयुक्तसंबंधिना for संयुक्तस्य. M स्यात् for भवति. GKMS पक्कं पिक्क for पक्वः पिक्को. 79. M स्थितानां for वर्तमानाना. After लग्गो B adds मग्नः मग्गो. B कोड्डं for कुड्डं. G °त्रयस्यापि प्राप्तौ; M °त्रयप्राप्तौ; T °त्रयप्राप्तो for °त्रयविधिप्राप्तौ. S om. द्विपः दिवो. B दिआई; M दिजाई for दुआई. MK उव्विग्गो for उद्विग्गो. M उद्विण्णो for उव्विण्णो. BGp MT केचित् for कश्चित्. BT उत्तरत्र for उत्तर°.

**धात्रीद्रे रस्तु ॥ ८० ॥**

धात्रीशब्दे द्रशब्दे च रेफस्य लुग्भवति तु । धात्री धत्ती धारी ॥ ह्रस्वात्प्रागेव रलोपे धाई ॥ द्र—चन्दो चन्द्रो । मन्दो मन्द्रो । रुद्दो रुद्रो । भद्दं भद्रं । समुद्दो समुद्रो ॥ 'ह्रदे दहयोः' [ १·४·११५ ] इति ह्रदशब्दस्य दहयोः स्थितिपरिवृत्तौ द्रह इति रूपम् । तत्र च दहो इति ॥ केचिन्नेच्छन्ति द्रे रलोपम् । द्रहशब्दः संस्कृतेऽपीति केचित् । वोद्रहास्तरुणपुरुषादिवाचका नित्यं रेफसंयुक्ता देश्या एव । सिक्खन्तु वोद्रहीओ । वोद्रहद्रहम्मि पडिआ । शिक्षन्तु तरुण्यः । तरुणह्रदे पतिता ॥८०॥

**ह्स्य मध्याह्ने ॥ ८१ ॥**

मध्याह्ने हस्य लुग्वा भवति । मज्झण्णो मज्झण्हो ॥ ८१ ॥

**ज्ञो ञोऽविज्ञाने ॥ ८२ ॥**

ज्ञकारसंबन्धिनो ञकारस्य लुग्भवति तु, अविज्ञाने विज्ञानशब्दे न भवति । ज्ञानम् जाणं णाणं । सर्वज्ञः सव्वज्जो सव्वण्णो । आत्मज्ञः अप्पज्जो अप्पण्णो । दैवज्ञः दइवज्जो दइवण्णो । इङ्गितज्ञः इङ्गिअज्जो इङ्गिअण्णो । अभिज्ञः अहिज्जो अहिण्णो । मनोज्ञः मणोज्जो मणोण्णो । प्रज्ञा पज्जा पण्णा। आज्ञा अज्जा अण्णा । संज्ञा सज्जा सण्णा ॥ अविज्ञान् इति किम् । विणाणं ॥८२॥

**द्वोर्द्वारे ॥ ८३ ॥**

द्वारे दकारवकारयोः पर्यायेण लुग्भवति तु । दारं वारं ॥ पक्षे । दुवारं ॥ ८३ ॥

**रात्रौ ॥ ८४ ॥**

रात्रिशब्दे संयुक्तस्य लुग्भवति तु । राई रत्ती ॥ ८४ ॥

---

80. M स्यात् for भवति. S om. मंदो मद्रो रुद्दो रुद्रो; T om. मंदो मंद्रो. G M om. ह्रदे दहयोरिति. GT om. द्रे. T वोद्रहशब्दः for द्रहशब्दः. S कश्चित्. BT द्रहादयः for वोद्रहादयः; Gp बोद्रहादयः. 81. K हकारस्य for हस्य. M स्यात् for भवति. 82. G ज्ञस्य for ज्ञकारस्य. M विना शब्दर्थशब्दो...for अविज्ञाने...भवति. GST सव्वण्णू. GST °ण्णू for °ण्णो under this Sūtra. K अभिज्जो for अहिज्जो. K आणा for अण्णा After अण्णा G adds आणा. 83. After दुवारं B adds देरं वेरं.

**रितो द्वित्वल् ॥ ८५ ॥**

रेफानुबन्धस्यादेशव्यञ्जनस्य द्वित्वं लिद्भवति । अङ्कोल्लो अङ्कोलः। रुण्णं रुदितम् । करणिज्जं करणीयम् ।। ८५ ।।

**शेषादेशस्याह्रोऽचोऽखोः ॥ ८६ ॥**

द्वित्वमिति वर्तते । संयुक्तयोरेकतरस्य लोपे योऽवशिष्यते स शेषः । तस्य संयुक्तादेशस्य च अह्रः हकाररेफवर्जितस्य अचः स्वरात्परस्य अखोः अनादौ वर्तमानस्य द्वित्वं लिद्भवति ।। शेषः—समस्तः समत्तो । निस्पृहः णिप्पिहो । भुक्तम् भुत्तं । दुग्धम् दुद्धं । षट्पदः छप्पओ । खड्गः खग्गो । उत्पलम् उप्पलं । मुद्गरः मुग्गरो । प्राप्तः पत्तो । दुर्गम् दुग्गं । दुःखम् दुक्खं । अन्तःपातः अन्तप्पाओ । निश्चलः णिच्चलो । दुष्करम् दुक्करं । विप्लवः विप्प-ओ । पक्वम् पक्कं । धूर्तः धुत्तो । रात्रिः रत्ती । युक्तम् जुत्तं । युग्मम् जुग्गं । रश्मिः रस्सी । नग्नः नग्गो । काव्यम् कव्वं ।। आदेश—रक्तः रग्गो । सक्तः सग्गो । अमात्यः अमच्चो । आत्मा अप्पा । आर्या अज्जा । उपाध्यायः उव-ज्झाओ । सह्यः सज्झो । साध्वसम् सज्झसं । बृहस्पतिः बहप्फई ।। अह्र इति किम् । विह्वलः विहलो । दुःखम् दुहं । बाष्पः बाहो । धात्री धारी । तूर्यम् तूरं। धैर्यम् धीरं ।। अच इति किम् । कांस्यम् कंसं । वयस्यः वअंसो । संध्या संझा । भिन्दिपालः भिण्डिवालो ।। अखोरिति किम् । स्खलितः खलिओ । स्थूलः थूरो । स्तम्भः खम्भो ।। ८६ ।।

---

85. S om.the Sūtra.BKM अंकोलं for अंकोल्लो.K om.करणीयम्. 86. M अनुवर्तते for वर्तते. M अवशिष्टः for अवशिष्यते. M om. अह्रः, M om. अचः. GMS om. लित्, GKS मोग्गरो for मुग्गरो GKM S om. दुर्गम् दुग्गं GKM om. युक्तम् जुत्तं GK शक्तः for सक्तः S अज्जू for अज्जा. S बुहप्पई for बहप्फई. S अस्तोरिति for अखोरिति.

**दीर्घान्न ॥ ८७ ॥**

शेषादेशस्येति वर्तते । लाक्षणिकादलाक्षणिकाच्च दीर्घात्परयोः शेषादेशयोः द्वित्वं न भवति । लाक्षणिकात्—निःश्वासः णीसासो । स्पर्शः फासो । दंष्ट्रा दाढा । अस्पर्शः अप्फासो ॥ लाक्षाणिकात्—पार्श्वम् पासं । शीर्षम् सीसं । ईश्वरः ईसरो । द्वेष्यः वेसो । लास्यम् लासं । आस्यम् आसं । प्रेष्यः पेसो । निर्माल्यम् ओमालं । आज्ञा आणा । आज्ञप्तिः आणत्ती । आज्ञापनम् आणावणं॥ अमच्चो इत्यादिषु 'संयोगे'[१·२·४०] इति आदावेव ह्रस्वः, पश्चाल्लोपे द्वित्वम् । अलाक्षणिकात्प्रायो द्वित्वाभावः प्रयोगतोऽनुसर्तव्यः ॥ ८७ ॥

**कर्णिकारे णो वा ॥ ८८ ॥**

कर्णिकारे शेषस्य णस्य द्वित्वं वा न भवति । कण्णिआरो कणिआरो॥ वाग्रहणमुत्तरार्थम् ॥ ८८ ॥

**धृष्टद्युम्ने ॥ ८९ ॥**

धृष्टद्युम्ने आदेशस्य णस्य द्वित्वं न भवति । पृथग्योगान्न विकल्पः । धट्ठज्जुणो ॥ ८९ ॥

**वा से ॥ ९० ॥**

से समासे शेषादेशयोर्द्वित्वं वा भवति । णइग्गामो णइगामो । कुसुमप्पअरो कुसुमपअरो । देवत्थुई देवथुई । हरक्खन्दा हरखन्दा हरस्कन्दौ । आणालक्खम्भो आणालखम्भो ॥ ९० ॥

---

87. KMST om. लाक्षणिकात्. K देसो for वेसो. GKMT अवमाल्यं for निर्माल्यम्. K ओमालो for °मालं. K आणवणं for आणावणं. After आणावणं S adds इत्यादि. GKST om. लोपे. 89. BMT om. धृष्टद्युम्ने in Com. M स्यान्निलं for भवति । पृथग्योगान्न विकल्पः. B धट्ठजुणो. 90. M om. से in Com. BT हरक्कन्दा हरकंदा for °खन्धा हरखंधा. K आलाणक्खम्भो for आणाल°. T om. आणालखंभो.

**प्रमुक्तगे ॥ ९१ ॥**

से इति वर्तते वेति च । प्रमुक्तादिषु समासे यथादर्शनं व्यञ्जनस्य द्वित्वं वा भवति । प्रमुक्तः पम्मुक्को पमुक्को । सपिपासः सप्पिवासो सपिवासो । बद्धफलः बद्धप्फलो बद्धफलो । मलयशिखरखण्डः मलयासिहरक्खण्डो मलयासिहर-खण्डो । त्रैलोक्यम् तेल्लोक्कं तेलोक्कं । सपरितापः सप्परितावो सपरितावो । परवशः परव्वसो परवसो । प्रतिकूलम् पडिक्कूलं पडिकूलं । अदर्शनम् अद्दंसणं अदंसणं । इत्यादि ॥ आकृतिगणत्वात् प्रफुल्लम् पप्फुल्लं पफुल्लं । सपरिहासम् सप्परिहासं सपरिहासं । इत्यादि सिद्धम् ॥ ९१ ॥

**दैवगेषु ॥ ९२ ॥**

दैवादिषु यथादर्शन व्यञ्जनस्य द्वित्वं वा भवति । दैवम् दइव्वं दइवं । व्याकुलः वाउल्लो वाउलो । नखः णक्खो णहो । नीडं णेड्डं णीडं । निहितः णिहित्तो णिहिओ । मृदुत्वं माउक्कं माउअं । कुतूहलम् कोउहल्लं कोऊहलं । स्थूलः थुल्लो थोरो । एकः एक्को एओ । व्याहृतम् वाहित्तं वाहिअं । तूष्णीकः तुण्हिक्को तुण्हिओ । मूकः मुक्को मूओ । सेवा सेव्वा सेवा । अस्मदीयम् अम्ह-क्केरं अम्हकेरं । हूतम् हुत्तं हूअं । स्त्यानम् ठिण्ण ठीण । स्थाणुः खण्णू खाणू । स इव सो च्चिअ सो चिअ । स एव सो च्चेअ । इत्यादि ॥ ९२ ॥

**तैलादौ ॥ ९३ ॥**

तैलादिषु यथादर्शनमन्त्यस्यानन्त्यस्य च व्यञ्जनस्य द्वित्वं भवति । पृथग्योगान्नित्यम् ॥ तैलम् तेल्लं । व्रीडा विड्डा । प्रेम पेम्मं । स्रोतः सोत्तं । प्रभूतम् पहुत्तं । मण्डूकः मण्डुक्को । उदूखलम् ओक्खलं । यौवनम् जोव्वणं । ऋजुः उज्जू । विचकिलम् वेइल्लं । इत्यादि ॥ ९३ ॥

---

91. KS om. वेति च. After पफुल्ल BK add अप्प-रिहासो अपरिहासो. 92. G दैवगेऽखौ for the Sūtra. After दैवादिषु GKM add अनादौ. M om. यथादर्शनं. B अम्मक्केरं अम्मकेरं for अम्हक्केरं अम्हकेरं. After अम्हकेरं B adds भूअ भुत्तं भूतम् G थिण्ण थीणं for ठिण्णं ठीण. After सो चेअ B adds चिअस्सा चिअसा (?) 93. T अन्त्यान-न्त्यस्य for अन्त्यस्यानन्त्यस्य च. M द्वित्वं स्यान्नित्यम् for द्वित्व भवति. M om. पृथग्योगान्नित्यम्; GK °योगाच्च विकल्पः. KMS om. उलूखलं ओक्खलं.

**पूर्वमुपरि वर्गस्य युजः ॥ ९४ ॥**

वर्गसंबन्धिनो युग्वर्णस्य शेषस्यादेशस्य वा द्वित्वप्रसङ्गे उपरि पूर्वमक्षरं भवति । वर्गाणा द्वितीयस्योपरि प्रथमं चतुर्थस्योपरि तृतीयमित्यर्थः । व्याख्यानम् वक्खाणं । वृक्षः रुक्खो । व्याघ्रः वग्घो । अर्घति अग्घइ । मूर्छा मुच्छा । अक्षीणि अच्छीणि । निर्झरः णिज्झरो । मध्यम् मज्झं । निष्ठुरः णिट्ठुरो । मुष्टिः मुट्ठी । तीर्थम् तित्थं । हस्ती हत्थी । हस्तः हत्थो । निर्धनः णिद्धणो । आश्लिष्टः आलिद्धो । गुल्फम् गुप्फं । पुष्पम् पुप्फं । निर्भरः णिब्भरो । विभ्रमः विब्भमो । पिप्पलः पिप्फलो ॥ प्रमुक्तादौ [ १·४·९१ ] द्वित्वे मलयसिहरक्खण्डो ॥ दैवादौ [ १·४·९२ ] णक्खो ॥ तैलादौ [१ ४·९३] ओक्खलं ॥ समासे [ १·४·९० ] कइद्धओ कपिध्वजः ॥ द्वित्व इत्येव । ख्यातः खाओ ॥ ९४ ॥

**प्राक्श्लाघाप्लक्षशार्ङ्गे ङ्लोऽत् ॥ ९५ ॥**

श्लाघादिषु ङ्लः ङकारलकारयोः प्राक् अत् अकारो भवति । श्लाघा सलाहा । प्लक्ष. पलक्खो । शार्ङ्गम् सारङ्गं ॥ ९५ ॥

**क्ष्मारत्नेऽन्त्यहलः ॥९६॥**

प्रागित्यनुवर्तते, अदिति च । क्ष्माशब्दे रत्नशब्दे च संयुक्तस्यान्त्यहलः अन्त्यव्यञ्जनस्य प्रागत्वं भवति । क्ष्मा छमा खमा । रत्नम् रअणं ॥९६॥

**स्नेहाग्न्योर्वा ॥ ९७ ॥**

अन्त्यहल इत्यनुवर्तते । स्नेहाग्न्योः संयुक्तस्यान्त्यहलः प्रागत्वं वा भवति । सणेहो णेहो । अगणी अग्गी ॥ ९७ ॥

---

94. T om. प्रथमचतुर्थस्योपरि. S om. तीर्थम् तित्थ । हस्ती हत्थी । हस्तः हत्थो. M om. विभ्रमः विब्भमो. B विप्पलः विचूलो, T पिप्पलो विचूलो (?); GK om. पिप्पलः. GK विप्फलो विब्भलो for पिप्फलो. 95. T पलग्घो for पलक्खो. 96. KS क्ष्मारत्नशब्दयो for क्ष्माशब्दे रत्नशब्दे च. K om. छमा. GT om. खमा. 97. S स्नेहाग्नौ वा for the Sūtra. S om. अन्त्यहलः इत्यनुवर्तते; B इति वर्तते, M इत्यनुवृत्तिः. M सिणेहो for णेहो.

**र्शर्षतप्तवज्रेष्वित् ॥ ९८ ॥**

र्श र्ष इत्येतयोस्तप्ते वज्रे च संयुक्तस्यान्त्यहलः प्रागित्वं वा भवति। र्श—आदर्शः आअरिसो आअंसो। सुदर्शनः सुअरिसणो सुदंसणो। दर्शनम् दरिसण दंसणं॥ र्ष—वर्षम् वरिसं वासं। वर्षाः वरिसा वासा। वर्षशतम् वरिससअं वाससअं। तप्तः तविओ तत्तो। वज्रं वइरं वज्जं॥ ९८॥

**हर्षामर्षश्रीह्रीक्रियापरामर्शकृत्स्नदिष्ट्यार्हे ॥ ९९ ॥**

हर्षादिषु र्ह इत्यत्र च संयुक्तस्यान्त्यहलः प्रागित्वं भवति॥ पृथग्योगान्नित्यम्॥ हर्षः हरिसो। अमर्षः अमरिसो। श्रीः सिरी। ह्री हिरी। अह्रीकः अहिरिओ। क्रिया किरिआ। परामर्शः परामरिसो। कृत्स्नम् कसिणं। दिष्ट्या दिट्ठिआ॥ र्ह—अर्हः अरिहो। गर्हा गरिहा। बर्हः बरिहो॥ ९९॥

**स्याद्भव्यचैत्यचौर्यसमे यात् ॥ १०० ॥**

स्याद् भव्य चैत्य इत्येतेषु चौर्यसमेषु च यकारात्प्रागित्वं भवति। स्यात् सिआ। स्याद्वादः सिआवाओ। भव्यः भविओ। चैत्यम् चेइअं। चौर्यसम—चौर्यम् चोरिअं। गाम्भीर्यम् गम्भीरिअं। धैर्यम् धीरिअं। भार्या भारिआ। सौन्दर्यम् सुन्दरिअं। ब्रह्मचर्यम् बम्हचरिअं। सूर्यः सूरिओ। शौर्यम् सोरिअं। आचार्यः आइरिओ। वर्यः वरिओ। वीर्यम् वीरिअं। चर्या चरिआ। स्थैर्यम् थेरिअं। इत्यादि॥ आकृतिगणत्वात्पर्यङ्कादयः। पर्यङ्कः पलिअङ्को॥ १००॥

---

98. T शीर्ष° for र्शर्ष° in the Sūtra, Bp °वज्रतप्तेषु in the Sūtra. M om. आअंसो, BT आअस्सो; G आयंसो, K आइंसो. M om. वइर. 99. KS पृथग्योगान्न विकल्पः; M पृथक्त्वान्नित्यम्. M om. गरिहा गर्हा। बर्हः बरिहो. 100. K स्यादित्यादिषु for स्या...इत्येतेषु T चौर्यसमेषु for °समे. M चोरिओ for चोरिअं. After चोरिअं S adds चोरिआ. M om. from गाम्भीर्यम् down to the end of the Sūtra. S om. पर्यङ्कादयः. GK परिअंको for पलिअंको.

**लादक्लीबेषु ॥ १०१ ॥**

संयुक्तस्य लकारात्प्रागित्वं भवति । अक्लीबेषु क्लीबप्रकारेषु न भवति । क्लिन्नम् किलिन्नं । क्लिष्टम् किलिट्ठं । क्लृप्तम् किलित्तं । प्लुष्टम् पिलुट्ठं । क्लान्तम् किलितं । प्लोषः पिलोसो । श्लेष्मा सिलिम्हो । श्लेषः सिलेसो । शुक्लम् सुकिलं । क्लेदः किलेओ । क्लेशः किलेसो । प्लवः पिलेवो । अम्लम् अमिलं । ग्लायति गिलाअइ । म्लायति मिलाअइ । म्लानम् मिलाणं । क्लाम्यति किलम्मइ ॥ अक्लीबेष्विति किम् । क्लीबः कीवो । विक्लवः विक्कओ । क्लमः कमो । प्लवः पवो । विप्लवः विप्पओ । शुक्लपक्षः सुक्कपक्खो । उत्प्लावयति उप्पावेइ ॥ १०१ ॥

**नात्स्वप्ने ॥ १०२ ॥**

स्वप्ने संयुक्तस्य नकारात्प्रागित्वं भवति । सिविणो सिमिणो ॥१०२॥

**स्निग्धे त्वदितौ ॥ १०३ ॥**

नादिति वर्तते । स्निग्धे संयुक्तस्य नकारात्प्रागत्वमित्वं च तु भवतः । सिणिद्धं सणिद्धं । पक्षे णिद्धं ॥ १०३ ॥

**कृष्णे वर्णे ॥ १०४ ॥**

अदिताविति वर्तते । वर्णवाचिनि कृष्णशब्दे संयुक्तस्यान्त्यहलः प्रागदितौ भवतः । कसणो कसिणो ॥ वर्ण इति किम् । कण्हो कृष्णः ( विष्णुः ) ॥ १०४ ॥

---

101. GT लादक्लबेषु, M लोऽक्लबेषु for the Sūtra. GMT अक्लबेषु क्लबप्रकारेषु. K पिलुट्ठं for पिलिट्ठ. K किलत for किलिन्न. K प्रोषः for प्लोषः. K सुक्किलं for सुकिल. T पिळवो for पिलेवो. B किलामइ for किलम्मइ. GKMT अक्लबेषु for अक्लीबेषु. GKMT क्लबः कओ for क्लीबः कीओ. G om. उत्प्लावयति उप्पावेइ. S उत्सादयति for उत्प्लावयति. 102. M न इत् स्वप्ने for the Sūtra. 103. BpT स्निग्धे तु for the Sūtra. MS स्निग्धे अदितौ for the Sūtra. S om. नादिति वर्तते. S om. तु G S om. पक्षे. S om. णिद्धं. 104. K कृष्णपर्णे for the Sūtra. After कृष्णशब्दे S adds संयुक्तस्य. After अदितौ K adds तु. M om. कृष्णः.

**अर्हत्युच्च ॥ १०५ ॥**

अर्हच्छब्देऽन्त्यहलः प्रागुत्वमदितौ च भवन्ति । अरुहो अरहो अरिहो । अरुहन्तो अरहन्तो अरिहन्तो ॥ १०५ ॥

**तन्व्याभे ॥ १०६ ॥**

उदित्यनुवर्तते । उकारान्ता ईकारप्रत्ययान्तास्तन्व्याभाः, तेषु संयुक्तस्यान्त्यहलः प्रागुत्वं भवति । तन्वी तणुवी । लघ्वी लहुवी । गुर्वी गुरुवी । पृथ्वी पुहुई । मृद्वी मउई । वह्वी बहुई । पट्वी पटुई । इत्यादि ॥ १०६ ॥

**स्नुघ्ने रात् ॥ १०७ ॥**

स्रुघ्ने संयुक्तस्य रात्पूर्वमुत्वं भवति । सुरुग्घं नगरम् ॥१०७॥

**एकाचि श्वःस्वे ॥ १०८ ॥**

एकस्वरयोः श्वः स्व इत्येतयोः संयुक्तस्यान्त्यहलः प्रागुत्वं भवति । श्वःकृतं सुवो कअं । स्वे जनाः सुवे जणा ॥ एकाचीति किम् । स्वजनः सअणो ॥१०८॥

**वा छद्मपद्ममूर्खद्वारे ॥ १०९ ॥**

एषु स्तोरन्त्यहलः प्रागुत्वं वा भवति । छउमं छम्मं । पउमं पोम्मं । मुरुक्खो मुक्खो । दुवारं । पक्षे । दारं वारं देरं वेरं ॥१०९॥

**ईल् ज्यायाम् ॥ ११० ॥**

ज्याशब्दे अन्त्यहलः प्रागीत्वं लिद्भवति । जीआ ॥ ११०॥

---

105. B अरुहितो आरिहितो अरहतो for अरुहन्तो etc. 106. S om. this Sūtra and Com. GMT ङीप्रत्ययान्ताः for ईकारप्रत्ययान्ताः. K लघुवी for लहुई. K पिहुई for पुहुई. GKMT om. पट्वी पटुई. 107. S om the Sūtra and Com. M om. संयुक्तस्य M प्रागुत्व स्यात् for पूर्वमुत्वं भवति. 108. S om. the Sūtra and Com. M प्रागुक्त स्तात् for प्रागुत्व भवति. B सजणो for सअणो 109. M स्यात् for भवति. B पम्मं; T पट्ट for पोम्म. G om. वारं वेरं; M om. देरं वेर; T om. वार देरं वेर. 111. S विपरीतवृत्तिः for स्थितिपरिवृत्तिः. M om. भवति.

**ह्रश्च महाराष्ट्रे ह्रोर्व्यत्ययः ॥ १११॥**

स्तोरिति निवृत्तम् । महाराष्ट्रशब्दे ह्रोः हकाररेफयोर्व्यत्ययः स्थितिपरिवृत्तिर्भवति । एकस्य स्थाने एको भवतीत्यर्थः । ह्रश्च ह्रस्वश्च दीर्घस्य भवति । मरहट्ठो ॥१११॥

**लनोरालाने ॥ ११२ ॥**

व्यत्यय इत्यनुवर्तते । आलाने लकारनकारयोर्व्यत्ययो भवति । आणालो ॥ ॥११२॥

**वाराणसीकरेण्वां रणोः ॥ ११३ ॥**

अनयो रेफणकारयोर्व्यत्ययो भवति । वाणारसी । कणेरू ॥ करेण्वामिति किम् । स्त्रीलिङ्गनिर्देशादन्यत्र न भवति । एसो करेणू ॥११३॥

**ललाटे डलोः ॥ ११४ ॥**

ललाटे टस्य डत्वे डलयोर्व्यत्ययो भवति । णिडालं णडालं । 'लो ललाटे च' [ १·३·८१ ] इति आद्यस्य णत्वमेव ॥११४॥

**ह्रदे दहयोः ॥ ११५ ॥**

ह्रदे दहयोर्व्यत्ययो भवति । द्रहो दहो ॥११५॥

**चलयोरचलपुरे ॥ ११६ ॥**

अचलपुरे चलयोर्व्यत्ययो भवति । अलअउरं ॥११६॥

**ह्ये ह्योर्वा ॥ ११७ ॥**

ह्य शब्दे हकारयकारयोर्व्यत्ययो वा भवति । गुह्यम् गुय्हं गुज्झं । सह्यं सय्हं सज्झं ॥११७॥

---

112. GKS add आणालखभो. After °खंभो G adds आलानस्तम्भः । स्तम्भ [ १·४·११ ] इति खत्वम्; K adds आलाने गजबन्धनस्तम्भ इत्यर्थः. 114. K णो ललाटे for the Sūtra. After डत्वे G adds सति. G om. णिडालं. 115. M दहोः for दहयोः in the Sūtra. 116. G अलअपुरं; KS अलचपुरं for अलअउरं. 117. M om. the Sūtra and Com. After गुज्झं BT read गुह्यअहं. After सज्झं BT read सहिअह.

**लघुके लहोः ॥ ११८ ॥**

लघुकशब्दे घस्य हत्वे हलोर्व्यत्ययो वा भवति । हलुओ लहुओ ॥ घस्य व्यत्यये कृते पदादित्वाद् हत्वं न भवतीति हत्वकरणम् ॥११८॥

**रलोर्हरिताले ॥ ११९ ॥**

हरिताले रलोर्व्यत्ययो भवति । हरिआलो हलिआरो ॥११९॥

**दर्वीकरनिवहौ दव्वीरयणिहवौ ॥ १२० ॥**

एतयोर्यथासंख्य दव्वीरअ णिहव इति कृतव्यत्ययविधानौ निपात्येते । दव्वीरओ सर्पः । पक्षे दव्वीअरो । णिहवो ॥१२०॥

**गहिआद्याः ॥ १२१ ॥**

गहिआ इत्यादयः शब्दा निर्वचनगोचरा निपात्यन्ते । (१) ग हि आ काम्यमाना ग्राह्या काम्यमानत्वात् । ह्रस्वः, चौर्यसमत्वात्प्रागित्वं च ॥ (२) कि मि घ र व स णं कौशेये । कृमिगृहवसनं कृमिविहितावरणादेव तत्तन्तोरुत्पत्तेः ॥ (३) ण न्दि णी धेनुः । नन्दिनीव नन्दिनी ॥ (४) प डि सा ओ घर्घरकण्ठः । प्रतिशब्दवत्त्वात् ध्वनेः प्रतिपादनत्वाद्वा ॥ (५) व इ रो डो जारः । पतिं रोटयति वञ्चयतीति । पो वः । टो डः ॥ (६) अ वि ण अ व ई अविनयपतिः ॥ (७) अ ण डो अनृतम् । प्रत्यादिपाठात् [ १·३·३३ ] तस्य डः ॥ (८) अ ज डो अजडः शीघ्रकारित्वात् ॥

---

118. GS लहोः; M लघोः for हलो in the Sūtra. G S लहोः for हलोः. S om. वा. T हकरण for हत्वकरणम्. 119. M om. हरिताले रलोर्व्यत्ययो भवति. 120. M दर्वीकरनिवहे तु for the Sūtra. B °दव्विअर° in the Sūtra. After °णिहवौ in the Sūtra G adds तु. S यथासंभवं for यथासख्य M °विधानेन for °विधानौ B दव्विरओ for दव्वीरओ. M om. पक्षे दव्वीअरो सर्पः. After णिहवो G adds णिवहो; T adds णीवाहो; S adds णिहओ. 121. (1) HD. 2.85. (2) HD. 2.33. GT किमिहरवसणं for किमिघर°. GT कौशेयम् for कौशेये. $T_2$ देवतरोरुत्पत्तेः for तत्तन्तोरुत्पत्ते°. (3) HD. 4.18.(4) HD. 4.17. B वड्णिाओ; K वडिसाओ for पडिसाओ. (5) HD. 7.42. T आरुकट स्तेये । पति कुट्यति वञ्चयति for रुट...°यतीति.(6) HD. 1.18.T अविनयवती for °पतिः. (7) HD.1.18. (अणाडो ).

(९) छिण्णो छिन्नः स्मरशरच्छिन्नत्वात् । (१०) छिण्णाली सदाचारच्छिन्ना लात्यादत्ते इति ॥ (११) छिच्छओ अक्षिक्षत. नयनप्रीत्यनर्हत्वात् । अक्ष्णोऽकारस्य लुक् ॥ (१२) मदोली कामपरंपराकारणत्वात् । आदेरातोऽत् ॥ (१३) संचारी दूती । प्रीति संचारयतीति ॥ (१४) सहउत्थिआ सहोत्थिता दूती । कार्यानुकूलत्वात् ॥ (१५) मराली दूती । मृदुस्वभावत्वान्मधुरवचनत्वाद्वा ॥ (१६) पेसणआरी दूती प्रेषणं करोतीति ॥ (१७) अत्तिहरी दूती । आर्तिहरी संतर्पणशीलत्वात् ॥ (१८) पडिसोत्तो प्रतिकूले । प्रतिमुखं स्रोतः प्रवाहो यस्यासौ ॥ (१९) पडिक्खरो प्रतिकूले । प्रतिमुखं क्षरतीति ॥ (२०) जोओ (२१) दोसणिजन्तो (२२) दोसारअणो (२३) समुद्दणवणीअं चन्द्र । द्योतत इति द्योतः । ज्योत्स्नायन्त्रम् । आत इः, जस्य दः, नात्प्रागत्वम् । दोषारत्नम् । समुद्रनवनीतं मथनोत्थितत्वात् ॥ (२४) चिरिचिरिआ (२५) चिलिचिडिआ धारा । चिरिचिरीति चिलिचिलीति ध्वनिर्यस्याः सा तथोक्ता ॥ (२६) समुद्दहरं अम्बुगृहं जलधारोपचारात् ॥ (२७) तम्बकुसुमं कुरबकं कुरण्टकं च । ताम्रकुसुमं तथाविधकुसुमत्वात् ॥ (२८) मुहरोमराई भ्रूः श्मश्रूर्वा मुखरोमराजिः तथाविधस्वरूपत्वात् ॥(२९) थेवो बिन्दुः स्तोकत्वात् ॥

---

(9) HD. 3 27. (11) HD. 1.174. G नयनप्रीत्याहितत्वात्; Gp हृतत्वात् ; T °प्रत्याहतत्वात् for नयनप्रीत्यनर्हत्वात्. (12) HD. 6.142. K om. मदोली upto संचारयतीति. Before मदोली G read सहउत्थिआ सहोत्थिता दूती. G मराली for मदोली. T अमराळी व ममराळी. (13) GKT om. सचारी दूती । प्रीतिं संचारयतीति. (14) HD 8.9. (15) 6.142. (16) HD. 6.59. T प्रेक्षण for प्रेषण. (17) HD 1.35. अतिहारी for अत्तिहरी. (18) HD. 6.18. G प्रतिकूलः for प्रतिकूले. (19) HD. 6.18. पडिसूरो for पाडिज्झरो. (20) HD. 3.40. (21) HD.5 51. (22) SK. (23) HD. 8.50. K मन्दरान्मथितत्वात् for मथनोत्थितत्वात्. (24) HD. 3.13. (25) HD. 3.13. (26) HD. 8.21. K समुद्रगृहं for अम्बुगृहं °After अम्बुगृहं G adds समुद्रगृहम्. (27) HD. 5 9. (28) HD. 6.136. S om. श्मश्रूर्वा.(29) HD. 5.29. S थोओ for थेवो.

(३०) धूमद्धअमहिसीओ कृत्तिकाः धूमध्वजमहिष्यः अग्निना संयुक्तत्वात् ॥ (३१) विसारो सैन्यं विसरणशीलत्वात् ॥ (३२) अवहोओ विरहः। अपभोगः भोगासहत्वात् ॥ (३३) पाओ (३४) पअलाओ फणी। प्राणिघातुकत्वात्पापः। पदानि लायति निगूहतीति पदलापः ॥ (३५) अहिअलो क्रोधः। अहिरिव वलति नाशयतीति अहिवलः ॥ (३६) सिहिणं स्तनः। शिखिलं चूचुकवत्त्वात्। अस्त्यर्थे णः ॥ (३७) थिरण्णेसो यो न कचिदपि स्थितिं बध्नाति, स्थिरं यथा स्यात्तथा न तिष्ठतीति थिरण्णेसो चपलहृदयः ॥ (३८) सूरङ्गो दीपः। सूरवदङ्गं यस्यासौ ॥ (३९) जोइक्खो ज्योतिष्कः ॥ (४०) पासावओ गवाक्षः। पासो इति प्राकृते चक्षुः, तदापद्यत इति पासावओ ॥ (४१) पासो पश्यतीति पासो अक्षि ॥ (४२) कोप्पो अपराधः। आत्मनः कोप एवापराधः ॥ (४३) उम्मुहो उन्मुखः ॥ (४४) उद्दणो उद्वदनः। दस्य वस्य च लुक् ॥ (४५) पहट्ठो प्रधृष्टः। गर्वीत्यर्थः ॥ (४६) लम्बा केशाः। लम्बन्त इति लम्बाः ॥ (४७) वल्लीवत् वेल्ली वल्लरीवत् ॥ (४८) वेल्लरिआ आदेरत एः, स्वार्थे कश्च ॥ (४९) जण्णहरो यज्ञहरो राक्षसः। तत्स्वभावत्वात् ॥ (५०) जणउत्तो ग्रामप्रधाननरः जनपुत्रः। तद्वदाचरतीति ॥ (५१) बम्हहरं (५२) आरनालं

---

(30) HD. 5.62. S संयुक्तत्वात् for संभुक्तत्वात्. (31) HD. 7.72. (32) HD. 1.35. अवहाओ for अवहोओ. (33) HD. 6.38. G पावो for पाओ (34) HD. 6.72. (35) HD 1.36. GK अहिअलो for अहिवलः. (36) HD. 7.31. B om. शिखिलं. (37) HD. 5.27. G थिरणासो, Gp थिरणामो. ST थिरण्णोसो. (38) HD. 8.41. (39) HD. 3.49. (40) HD. 6.43. (41) HD. 6.75. (42) HD. 2.45. (43) HD. 1.99. (44) HD. 1.99. (45) HD 6.9. (46) HD. 7.26. G लम्बो for लम्बा. After लम्बाः G adds वल्लो. (47) HD. 7.32. (48) HD 7.32. G विल्लरिआ for वेल्लरिआ. (49) HD. 3.43. जण्णोहणो, S जण्णहलो दक्षः for यज्ञहरो राक्षसः. (50) HD. 3.52. GT ग्रामप्रधान; for °प्रधाननरः (51) HD. 6.91. (52) HD. 1.66. G आरणालं. K अम्बुजं for अम्बुजे.

(५३) थेरोसणं अम्बुजे। ब्रह्मगृहम्। आराद् दूरे समीपे च नालमस्तीति आरनालं। द्वितीयस्यातोऽत्। स्थविरासनं स्थविरो ब्रह्मा। आत ओत्॥ (५४) कलिमं कन्दोट्टं उत्पले। के लीयते इति कलिमं। डिमः। कन्दादुट्टीकते उद्गच्छतीति कन्दोट्टं। 'स्तौ' [१·२·६५] इत्योत्वम्॥ (५५) चन्दोज्जं (५६) रअणिद्धअं कुमुदम्। चन्द्रेणोद्द्योतत इति चन्दोज्जं। रजनिध्वजम्॥ (५७) घरअन्दं मुकुरम्। गृहे चन्द्रवदुद्द्योतत इति॥ (५८) आआसतलं हर्म्यपृष्ठम्। आकाशतलमिति॥ (५९) आणन्दवडो नववध्वा रक्तारुणं वस्त्रम्, प्रथमरजस्वलाया रक्ताक्तः पटः, आनन्दविषयत्वात्॥ (६०) सूरद्धओ दिवसः। सूर्यो ध्वजो यस्य सः॥ (६१) पल्लविअं लाक्षारक्तम्। सपल्लवमिव पल्लवितम्॥ (६२) अच्छिवडणं निमीलनम्। अक्षिपक्ष्मणा पतनम्॥ (६३) णीसङ्को वृषः। निःशङ्कः॥ (६४) एलविलो धनवाश्च। चकाराद् वृषश्च॥ (६५) सुहरओ दारिकागृहं चटकश्च। सुखं रतमस्यास्तीति॥ (६६) हट्टमहट्टो स्वस्थः। हृष्टश्चासौ महार्थश्च॥ (६७) णिम्मीसुओ युवा निःश्मश्रुकः। आदेरत ई॥ (६८) जहणारोहो ऊरुः। जघनेनारुह्यत इति॥ (६९) पल्हत्थजीहो (७०) अउज्झहरो रहस्यभेदी। पर्यस्तजिह्वः। गुह्यहरः। आदावडागमः॥ (७१) णिहुअं निधुवनं सुरतं निभृतम्॥

---

(53) HD.5.29. (54) HD. 2.9. (55) HD.3.4. (56) HD.7.4. KS मुकुरं for कुमुदम्. K adds सितोत्पलं. (57)HD. 2.107.G घरअंदअ. (58) HD. 1.72. B आआसतअ for °तलं. G आकाशतलवदाभासत इति for °तलं. (59) HD. 1.72. KM रक्तासक्त वस्त्र for रक्ताक्तः पटः. (60) HD. 8.42. (61) HD. 6.19. G पल्लवितमिव for सपल्लवं. (62) HD. 1 39.G अक्षिपक्ष्माना for °पक्ष्मणा. (63) Sk. (64) HD. 1.148. GM add ऐलबिलवत्. (65) HD. 8.56. सुहराओ for सुहरओ. T सुमरओ for °सुहरओ. (66) HD. 8.65. (67) HD. 6.32. (68) HD. 3.44. GMT जहणरोहो, K जहणलाहो for °णारोहो. (69) HD. 6.35. (70) HD. 1.42.G अगुज्झहरो; M अउंझहरओ for अउज्झहरो. (71) HD. 4.50.

(७२) अब्बुद्धसिरी मनोरथाधिकफलप्राप्तिः। अबुद्धश्रीः। प्रमुक्तादिपाठात् [ १·४·९१ ] द्वित्वम्।। (७३) बहुजाणो चोरो धूर्तश्च। बहुज्ञानः।। (७४) परेओ परेतः पिशाचः।। (७५) उज्जल्लो बहुबलवान्। उज्ज्वलः। दैवादिपाठात् [ १·४·९२ ] द्वित्वम्।। (७६) जोई विद्युत् ज्योतिर्वा।। (७७) भिङ्गं कृष्णं भृङ्गवन्नीलत्वात्। भिङ्गं संस्कृत इत्येके।। (७८) णिअंधणं परिधानम्। निबध्यत इति निबन्धनम्।। (७९) जहणूसुअं चल्लणकम्। जघनांशुकम्। आतो बिन्दुना सह ऊत्वम्।। (८०) पाउरणं कवचः। प्रावरणकत्वात्। आदेरत उः (८१) ओअल्लो अपसारः कम्पश्च। अपचारे ओअल्लो। तैलादित्वात् [ १·४·९३ ] द्वित्वम्।। (८२) चवेडी करसंपुटाघातः।। (८३) रइलक्खं रतिलक्ष्यं जघनम्।। (८४) वावडो कुटुम्बी व्यापृतः।। (८५) पुरिल्लदेवा दैत्याः पुराभवाः।। (८६) गोसण्णो मूर्खः। गोसंज्ञः पशुप्रायत्वात्।। (८७) परभत्तो भीरुः निष्पीडश्च। परः शत्रुस्तद्भक्तश्च।। (८८) चच्चिक्को स्थासकः। चर्चिका। को द्वित्वं पुंस्त्वं च।। (८९) कालं तमिस्रं नीलत्वात्।। (९०) भट्टिओ विष्णुः। भर्तृकः जगत्पोषकत्वात्। ऋत इत्।। (९१) इन्दग्गिधूमं तुहिनम्। इन्द्राग्निधूमः।। (९२) पत्थरं पादताडनम्। प्रस्तरवत्पत्थरं दुःसहत्वात्।।

---

(72) HD1.42.(73) HD.(बहुणो).6.97 (74) HD. 6.12. (75) HD. 1.154. ओज्जल्लो,M उज्जलो for उज्जल्लो.(76) HD.3.49.K adds द्योतत इव; M द्योती वा. (77) HD. 4.104. MS om. भिंगं संस्कृत इत्येके. (78) HD. 4.3. (79) HD. 3.45. B जहणूसअं for °णूसुअं. (80) HD. 6.43. (81) HD. 1.165. KS कशादित्वात् for तैलादित्वात्. (82) HD. 3.3.GK करसंपुटघातः for °टाघातः. (83) HD. 7.13. (84) HD 7.54. (85)HD. 6.55. (86) HD. 2.97.S णोसण्णो for गोसण्णो. (87) HD. (परिब्भंतो).6.72. M परहत्तो for परभत्तो. KMS निषिद्धश्च for निष्पीडश्च. (88)HG 2.174. M om.·चर्चिका. (89)HD. 2.26. (90) HD. 6.10. (91) HD. 1.80. (92) HD. (पत्थरा); 6.8. Gp पद्दरा; M पत्थमं for पत्थरं.

(९३) ओ वा अ ओ अस्तकालः । अपातपः ॥ (९४) पि उ च्छा (९५) मा उ आ सखी । पितृष्वसेव मातृकेव हितकारित्वात् ॥ (९६) पो र त्थो मत्सरी । पौलस्त्यवत् ॥ (९७) दो सो कोपः आत्मदोषत्वात ॥ (९८) च च्चा चर्चा तलाहतिः ॥ (९९) प म्ह लो केसरः । पक्ष्मलवत् ॥ (१००) ख न्ध ल ट्ठी (१०१) ख न्ध म सो भुजस्कन्धस्य यष्टिः । स्कन्धं प्रमृशतीति ॥ (१०२) अ ग्गि आ ओ (१०३) त म्ब कि मी इन्द्रगोपः । अग्निवत्कायोऽस्येति अग्निकायः । ताम्रकृमिः ॥ (१०४) वि हा ड णो अनर्थः । विघाटनम् ॥ (१०५) जो इ ओ ज्योतिरिङ्गणः खद्योतः ॥ (१०६) सि ञ्जि रो ध्वनिः । शिञ्जनमेव ॥ (१०७) जो इ सो (१०८) जो अ णा (१०९) जो डो (११०) ख ज्जो ओ खद्योते । तारका । ज्योतिषं जोइसं । द्योतना जोअणा । द्योतः जोडो । तस्य डः । खे द्योतत इति खद्योतः खज्जोओ ॥ (१११) द र व ल्ल हो कान्तः । दरो भयः तत्र वल्लभः । (११२) का अ रो कातरः वियोग-भीरुत्वात् ॥ (११३) प ण्ड र ङ्गो महेश्वरः । धवलाङ्गत्वात् ॥ (११४) भो इ ओ ग्रामेशः । भोगं चरतीति भोगिकः ॥

---

(93) KD. 1.162. G ओआअवो for ओवाअओ. G adds ओवाश्ळो अस्तकालः अवपातः अतोपकारः (?) ओवायवो ओवायवा अस्तकालः अपातपः अपौकारः (?). (94) HD. 6.49. B पिउच्चा for पिउच्छा. (95) HD. 6.148. (96) HD. 6.62. पोरच्छो for पोरत्थो. (97) HD. 5.56. (98) HD. 3.19 M चंचा for चच्चा. (99) HD. 6.13. (100) HD. 2.71. G खंधअट्ठी for °लट्ठी. (101) HD. 2.71. G मृशतीति for प्रमृशतीति. (102) HD. 1.53. अग्गिओ for अग्गिआओ. (103) HD. 5.6. (104) HD. 7.71. B विहडणो for विहाडणो. (105) HD. 3.50. (106) G सिंजओ for सिंजिरो. (107) HD. 3.50 B जोइओ; K जोइसं for जोइसो. (108) HD. 3.50. (109) HD. 3.49 B जोअडो for जोडो. (110) HD. 2.69. B खज्जओ for खज्जोओ. (111). HD. 6.37. (112) HD. 2.58. कायलो; कायरो for काअरो. (113). HD. 6.23. (114) HD. 6.108.

(११५) सग्गहो मुक्तः। सुष्टु अग्रहः स्वग्रहः ॥ (११६) संकरो रथ्या । संकीर्यते अत्रेति सङ्करः॥ (११७) पअरो प्रवरः अर्थपरः। अर्थे प्रकर्षेण वरः॥ (११८) मइमोहिणी सुरा । मतिमोहिनी ॥ (११९) धारावासो दर्दुरः प्रावृषेण्यत्वात् ॥ (१२०) कमलं आस्यं कलहश्च । कमलवत्कमलं । कं मस्तकं मलतीति ॥ (१२१) वेणुसाओ (१२२) धुअराओ भ्रमरः। वेणुशब्द- वच्छब्दो यस्य स वेणुसाओ । संयुक्तस्य लुक् । ध्रुवरागः सदा सुस्वरत्वात् ॥ इत्यादि॥ अस्मिन्गणे लिङ्गव्यत्ययः प्रयोगाधीनः ॥

इति श्रीमदर्हनन्दित्रैविद्यदेवश्रुतधरश्रीपादप्रसादासादितसमस्तविद्याप्रभाव- श्रीमत्त्रिविक्रमदेवविरचितप्राकृतव्याकरणवृत्तौ

प्रथमोध्यायस्य चतुर्थः पादः ॥

प्रथमोऽध्यायः समाप्तः ॥

---

(115) HD 8.4. M अनुग्रहः for अग्रहः. (116) HD. 8.6. (117) M वअरो; S पइरो. B अर्थदरः; M अधम् (118) HD. 6.113. (119) HD. 5.63. S दुर्धर for दर्दुरः. (120) HD. 2 54.(121) HD. 7.78. वेणुणासो for वेणुसाओ. (122) HD. 5.7. S om सदा. Colophon: B KMS om. from °मदर्हनन्दि...to प्रभाव. KMS इति प्राकृतव्याकरणवृत्तौ प्रथमस्याध्यायस्य.

# द्वितीयोऽध्यायः ॥

## प्रथमः पादः ॥

**मन्तमणवन्तमाआलुआलइरइल्लउल्लइन्ता मतुपः ॥ १ ॥**

मतुप्प्रत्ययस्य मन्त मण वन्त मा आलु आल इर इल्ल उल्ल इन्त इत्येते दशादेशा यथाप्रयोगं भवन्ति । मन्त—सिरिमन्तो श्रीमान् । पुण्णमन्तो पुण्यवान् ॥ मण—धणमणो धनवान् ॥ वन्त—धणवन्तो धनवान् । भत्तिवन्तो भक्तिमान् ॥ मा—हणुमा हनुमान् । पडमा पटवान् ॥ आलु—णेहालू स्नेहालुः । दआलू दयालुः । ईसालू ईर्ष्यालुः ॥ आल—सद्दालो शब्दवान् । जडालो जटावान् । पडालो पटवान् । रसालो रसवान् । जोण्हालो ज्योत्स्नावान् ॥ इर—गहिरो ग्रहवान् ॥ इल्ल—सोहिल्लो शोभावान् । छाइल्लो छायावान् । धामिल्लो धामवान् ॥ उल्ल—विआरुल्लो विकारवान् । मंसुल्लो मासवान् । दप्पुल्लो दर्पवान् ॥ इन्त—कहइन्तो कथावान् । माणइन्तो मानवान् ॥ मतुप इति किम् । धणी । अत्थी ॥ १ ॥

**वतुपो डित्तिअमेतल्लुक् चैतत्तद्यदः ॥ २ ॥**

एतद् यद् तद् इत्येतेभ्यः परस्य परिमाणार्थस्य वतुप्प्रत्ययस्य डित् इत्तिअ इत्यादेशो भवति एतदो लुक् च ॥ एतावत् एत्तिअं । यावत् जित्तिअं । तावत् तित्तिअं ॥ २ ॥

---

N. B - G is not available from this chapter to the end.
1. MS °उन्ता for °इन्ता in the Sūtra and Com. KMST आदेशा for दशादेशा. After धणमणो K adds दुग्गमणो. M विहिमणो for धणमणो. After धणवन्तो KS add सुहवन्तो हत्थिवन्तो. M धणुमा for हणुमा. KMS om. पडमा पटवान्. After आलु KT add भआलू M सिणेहालू for णेहालू. M om. पडालो पटवान्. KS ईसालो; T रस्सालू for रसालो. After गहिरो KM add गव्विरो मोहिरो, S adds मोहिरो. KS छाहिल्लो for छाइल्लो. $BT_1$ जामिल्लो, KS आमइल्लो; M जाइल्लो; $T_2$ जमिळ्ळो for धामिल्लो M पिआउल्लो महुल्लो for विआऊल्लो मंसुल्लो. M उन्त—पउत्तो माणउत्तो for कहइन्तो माणइन्तो. S om. माणइन्तो. S हत्थी for अत्थी. 2. M मतुपो for वतुपो. Bp डिंत्तिअमिदमेत° for डित्तिअमेत° in the Sūtra. BMST चैतद्यत्तदः for चैतत्तद्यदः in the Sūtra. M एतेभ्यः for इत्येतेभ्यः. M वा भवति for भवति. S om. from यावत् down to णस्य in Sūtra 4.

**किमिदमश्च डेत्तिअडित्तिलएद्दहम् ॥ ३ ॥**

किमिदंभ्या चादेतत्तद्यद्भ्यश्च परस्य वतुप्प्रत्ययस्य डानुबन्धा एत्तिअ इत्तिल एद्दह इत्येते आदेशा भवन्ति । एतावत् एत्तिअं इत्तिलं एद्दहं । यावत् जेत्तिअं जित्तिलं जेद्दहं । तावत् तेत्तिअं तित्तिलं तेद्दहं । कियत् केत्तिअं कित्तिलं केद्दहं । इयत् एत्तिअं इत्तिलं एद्दह ॥ ३ ॥

**इकः पथो णस्य ॥ ४ ॥**

'पथो ण नित्यम्' इति यः पथिन्शब्दात् णप्रत्ययो विहितः, तस्य इक इत्यादेशो भवति । पान्थः पहिओ ॥ ४ ॥

**खस्य सर्वाङ्गात् ॥ ५ ॥**

सर्वाङ्गाद्व्यापिन्यर्थे विहितस्य खप्रत्ययस्य इको भवति । सर्वाङ्गीणः सव्वङ्गिओ ॥ ५ ॥

**छस्यात्मनो णअः ॥ ६ ॥**

आत्मनः परस्य छप्रत्ययस्य णअ इत्यादेशो भवति । आत्मीयम् अप्पणअं ॥ ६ ॥

**हित्थहास्त्रलः ॥ ७ ॥**

सप्तम्यन्तात्सर्वनाम्नो विहितस्य त्रल्प्रत्ययस्य हि त्थ ह इति त्रय आदेशा भवन्ति । यत्र जहिं जत्थ जह । तत्र तहिं तत्थ तह । कुत्र कहिं कत्थ कह । अन्यत्र अण्णहिं अण्णत्थ अण्णह ॥ ७ ॥

---

3. K °डेद्दहम् for एद्दहम् in the Sūtra; M °एद्दहाः in the Sūtra. K इत्यादेशाः for इत्येते आदेशाः. After आदेशा T adds डितो. After भवन्ति K adds एतल्लुक् च । अनुबन्धादन्त्यस्वरादेर्लुक्; M adds लुक् च । डानुबन्धादन्त्यस्य स्वरादेर्लुक्. B om. form °कियत् down to एद्दहं. M om. इयत् एत्तिअं एद्दहं. K कियत् केत्तिलं कित्तिअं केद्दहं for कियत् ..केद्दहं. 4. K पथो णः पन्थश्चेति यः; MT पथश्चेति य. for पथो ण नित्यम् इति यः. S पथिन्शब्दस्य; MT पथो णप्रत्ययो for पथिन्शब्दात् णप्रत्ययो. 5. M सर्वव्यापिन्यर्थे for सर्वाङ्गाद्व्यापिन्यर्थे. T अप्पणीअं for अप्पणअं. 7. K सप्तम्यन्तान्नाम्नो for सप्तम्यन्तात्सर्वनाम्नो.

**केर इदमर्थे ॥ ८ ॥**

इदमर्थे विहितस्य छप्रत्ययस्य केर इत्यादेशो भवति। युष्मदीयः तुम्हकेरो। अस्मदीयः अम्हकेरो॥ क्वचिन्न भवति। मदीयपक्षः मइज्जपक्खो। पाणिनीयम् पाणिणीअं ॥ ८ ॥

**राजपराड्डिक्कडक्कौ ॥ ९ ॥**

राजन् पर इत्येताभ्या परस्य इदमर्थे विहितस्य प्रत्ययस्य डितौ इक्क अक्क इत्येतौ भवतः। चकारात्केरश्च। राजकीयं राइक्कं राअक्कं राअकेरं। परकीयं परिक्कं परक्कं परकेरं ॥ ९ ॥

**डेच्चओ युष्मदस्मदोऽणः ॥ १० ॥**

युष्मदस्मद्भ्या परस्य इदमर्थस्याण्प्रत्ययस्य डित् एच्चअ इत्यादेशो भवति। यौष्माकम् तुम्हेच्चअं। आस्माकम् अम्हेच्चअं ॥ १० ॥

**वर्वतेः ॥ ११ ॥**

उपमानार्थे विहितस्य वतिप्रत्ययस्य वर् इत्यादेशो भवति। रित्त्वाद् द्वित्वम्। महुर व्व पाडलिउत्ते पासाआ, मथुरावत्पाटलिपुत्रे प्रासादाः ॥११॥

**तैलस्यानङ्कोलाड्डेल्लः ॥ १२ ॥**

अङ्कोलवर्जिताच्छब्दात्परस्य तैलस्य डित् एल्ल इत्यादेशो भवति। सुरहिजलेण कडेल्लं, सुरभिजलेन कटुतैलम्॥ अनङ्कोलादिति किम्। अङ्कोलतेल्लं ॥ १२ ॥

**त्वस्य तु डिमात्तणौ ॥ १३ ॥**

भावार्थे विहितस्य त्वप्रत्ययस्य डित् इमा त्तण इत्यादेशौ तु भवतः। पीनत्वं पीणिमा पीणत्तणं। पुष्पत्वं पुप्फिमा पुप्फत्तणं॥ पक्षे पीणत्तं पुप्फत्तं ॥ त्वस्येति किम्। पीणआ पीणदा पीनता ॥ १३ ॥

---

8. S om. क्वचिन्न भवति. M मईअपक्खो for मइज्जपक्खो. 9. MS °क्क च; T ढिक्कढक्कौ च for °डक्कौ in the Sūtra. KMS इत्यादेशौ क्रमेण भवतः for इत्येतौ भवतः. KMS पारिक्कं पारक्कं पारकेरं for परिक्कं...परकेरं. 10. Bp एच्चओ for डेच्चओ in the Sūtra. 11. BpT वर्त्वं; MS र्ववते for the Sūtra. B वरा; S र्वं for वर् in Com. 12. S om. कडेल्लं; T सुरहेल्लं कडुएल्लं for कडेल्लं. 13. M भावार्थस्य for भावार्थे विहितस्य. K पुप्फमा for पुप्फिमा. S om. from पीनत्वं down to सव्वदो under the next Sūtra. M om. पीणदा.

**दो त्तो तसः ॥ १४ ॥**

त्वित्यनुवर्तते। पञ्चम्यन्तात्सर्वनाम्नः परस्य तसिल्प्रत्ययस्य दो त्तो इत्येतौ तु भवतः। सव्वदो सव्वत्तो। एअदो एअत्तो। अण्णदो अण्णत्तो। कदो कत्तो। तदो तत्तो। जदो जत्तो। इदो इत्तो॥ पक्षे सव्वओ इत्यादि॥ १४॥

**एकाद्दः सिसिआइआ ॥ १५ ॥**

एकशब्दात्परस्य दाप्रत्ययस्य सि सिआ इआ इति त्रय आदेशा भवन्ति तु। एकदा एक्कसि एक्कसिआ एक्कइआ एकआ॥ १५॥

**ल्हुत्तः कृत्वसुचः ॥ १६ ॥**

'वारे कृत्वसुच्' इति विहितस्य कृत्वसुच्प्रत्ययस्य हुत्त इत्यादेशो भवति। लित्वान्नित्यम्। सअहुत्तो। सहासहुत्तो। चुम्बिज्जइ सअहुत्तो। उवगूहिज्जइ सहासहुत्तो। रमिआ वि पुणो रमिज्जइ णवत्तणे णत्थि पुणरुत्तं। पिअहुन्तं इति तु अभिमुखार्थेन हुन्तशब्देन भविष्यति॥ १६॥

**भवे डिल्लोल्लडौ ॥ १७ ॥**

भवार्थे नाम्नः परौ इल्ल उल्ल इत्येतौ डितौ भवतः। इल्ल—मातुलानी मामी तत्र भवा मामिल्लिआ। पुरो भवं पुरिल्लं। अधो भवं हेट्ठिल्लं। उपरि भवं उवरिल्लं॥ उल्ल—आत्मभवं अप्पुल्लं। अल्ललावपीच्छन्त्यन्ये॥ १७॥

---

14. K नाम्नः for सर्वनाम्नः. M तस्प्रत्ययस्य, K तसिप्रत्ययस्य for तसिल्प्रत्ययस्य. K M इत्यादेशौ for इत्येतौ. M एगआ for सव्वओ. 15. M om. तु 16. M ल्हुत्वं कृत्वसः; S ल्हुत्व कृत्वस., T ल्हुकृत्वसः; for the Sūtra. KMST वारे कृत्वस् for वारे कृत्वसुच् KMS प्रत्ययस्य कृत्वसः for कृत्वसुच्प्रत्ययस्य. KS लित्वान्न विकल्पः for लित्वान्नित्यम्. B उपगूहिज्जइ for उव° K S सहस्सहुत्तो for सहास°. T सअभुत्तं सहस्सभुत्तं. B रमज्जइ for रमिज्जइ. M S om. from सहासहुत्तो down to णत्थि. 17. M डिल्लोल्लड्ः; T डिल्लोल्लडः for °ल्लडौ in the Sūtra. M इत्यादेशौ for इत्येतौ.

**स्वार्थे तु कश्च ॥ १८ ॥**

स्वार्थे नाम्नः परं कप्रत्ययो भवति तु । चकारात् डिल्लोल्लडौ च । चन्द्रः चन्दओ । हृदयं हिअअअं । इह इहअं । आश्लिष्टं आलिद्धअं ॥ द्विरपि भवति । बहुअअं ॥ ककारोच्चारणं पैशाचीभाषार्थम् । वदनं वतनकं । डि ल्ल—णिज्जि-आसोअपल्लविल्लेण, निर्जिताशोकपल्लवेन । पुरिल्लो पुरा पुरो वा ॥ उ ल्ल ड्—पिउल्लो प्रियः । मुहुल्लं मुखम् । हत्थुल्लो हस्तः ॥ पक्षे चन्दो इत्यादि ॥ कुत्सादिविशिष्टे तु संस्कृतवदेव कः सिद्धः ॥ १८ ॥

**उपरेः संव्याने ल्लल् ॥ १९ ॥**

स्वार्थ इत्यनुवर्तते । संव्यानार्थे उपरिशब्दात् द्विरुक्तो लो भवति । लित्त्वान्नित्यम् । उवरिल्लो ॥ संव्यान इति किम् । उवरि ॥ १९ ॥

**नवैकाद्वा ॥२०॥**

नव एक इत्येताभ्या परं स्वार्थे द्विरुक्तो लो वा भवति । णवल्लो णवो । एक्कल्लो एक्को ॥ २० ॥

**मिश्राल्लिअश् ॥ २१ ॥**

मिश्रशब्दात्स्वार्थे लिअ इत्यादेशो वा भवति । शित्त्वात्पूर्वस्य दीर्घः । मीसालिअं मिस्सं ॥ २१ ॥

**शनैसो ल्डिअं ॥ २२ ॥**

शनैः शब्दात्स्वार्थे लित् डिच्च इअं इत्यादेशो भवति । सणिअं ॥२२॥

**मनाको डअं च वा ॥ २३ ॥**

मनाक्शब्दात्स्वार्थे डित् अअं इअं च प्रत्ययौ वा भवतः । मणअं मणिअं । पक्षे मणा ॥ २३ ॥

---

18. M चार्थे for स्वार्थे in the Sūtra and Com. K om. परं, MT परः. M om. तु. B द्वित्वेऽपि, T द्विरपि for द्विरपि भवति. MST पैशाचिकभाषार्थम् for पैशाचीभाषार्थम्. KST वदनकं for वतनक. K चन्द्रो for चन्दो. 19. Before द्विरुक्तो S reads स्वार्थे S om. लित्त्वान्नित्यम्, M लित्त्वान्न विकल्पः. M अवरिल्लो for उवरिल्लो. M अवरि for उवरिं. 20. M इत्याभ्या for इत्येताभ्या. 21. T लिअट् for लिअश् in the Sūtra. M मीसं for मिस्सं.

**रो दीर्घात् ॥२४॥**

वेत्यनुवर्तते । दीर्घशब्दात्स्वार्थे रो वा भवति । दीहरं दीहं दिग्घं ॥ ॥ २४ ॥

**डुमअडमऔल् भ्रुवः ॥२५॥**

भ्रूशब्दात्स्वार्थे उमअ अमअ इत्येनौ डितौ लितौ भवतः । लित्वान्नित्यम् । भुमआ भमआ ॥ २५ ॥

**लो वा विद्युत्पत्रपीतान्धात् ॥ २६ ॥**

एभ्यः परं स्वार्थे लो वा भवति । विज्जुला विज्जू । पत्तलं पत्तं । पीअलं पीअं । अन्धलो अन्धो ॥ २६ ॥

**त्वादेः सः ॥ २७ ॥**

'तस्य भावस्त्वतलौ' इत्यादिना विहितत्वादेः परं स्वार्थे स एव त्वादिर्भवति । मृदुत्वेन मउत्तआइ । मृदुतया मउत्तआए । ज्येष्ठतरः जेट्ठअरो । कनिष्ठतरः कणिट्ठअरो ॥ २७ ॥

**इरः शीलाद्यर्थस्य ॥ २८ ॥**

शीलधर्मसाध्वर्थेषु विहितस्य प्रत्ययस्य स्थाने इर इत्यादेशो भवति । हसनशीलः हसिरो । रोदनशीलः रोइरो । लज्जाशीलः लज्जिरो । जल्पशीलः जप्पिरो । वेदनशीलः वेइरो । उच्छ्वसनशीलः ऊससिरो ॥ केचिदिरं तृन एवाहुः । तेषा नमिरकमिरादयो न सिध्यन्ति । तृनोत्तरादिना बाधितत्वात् ॥ ॥ २८ ॥

---

24. KMS om. दीह. 25. KM om, लितौ. KMS लित्वान्न विकल्पः for लित्वान्नित्यम्. KS भूमआ, M भुमअ; T हुमआ for भुमआ. 26. MT om. पर. KT विज्जुल्ला for विज्जुला. 27. MT भावे त्वतलादिना for तस्य भावस्त्वतलौ इत्यादिना. M परः for परं. After मउत्तआए M adds त्वादेरिति किम् 28. MS °साध्वर्थे, T शीलधर्मस्वार्थे for °साध्यवर्थेषु. T भसिरो for हसिरो. KS जपिरो for जप्पिरो. BT ऊसिरो; S उस्ससिरो for ऊससिरो. M केचिदिह आल एवाहुः for केचिदिरं तृन एवाहुः. M तेषां मते for तेषां.

**तुमत्तुआणतूणाः क्त्वः ॥ २९ ॥**

क्त्वाप्रत्ययस्य तुं अत् आण तूण इति चत्वार आदेशा भवन्ति। तुं—दट्ठुं। मोत्तुं। भोत्तुं॥ अत्—भमिअ। रमिअ॥ तुआण—घेत्तुआण। साउआण॥ 'क्त्वासुपोस्तु सुणात्' [१·१·४३] इत्यनुस्वारे कृते। घेत्तुआणं। सोउआणं॥ तूण—घेत्तूण। सोऊण। काऊण॥ अनुस्वारे। घेत्तूणं। सोऊणं। काऊणं॥ वन्दित्ता इति तु सिद्धावस्थायां वलोपे॥२९॥

**वरइत्तगास्तृनाद्यैः ॥ ३० ॥**

वरइत्त इत्यादयः तृनादिप्रत्ययैः सहिताः स्वराद्यादेशविशेषिता बहुलं निपात्यन्ते॥ (१) वरइत्तो वरयितृकः नूतनवरः। ऋतोऽत्, तो द्वित्वं च॥ (२) कणइल्लो (३) वाअडो शुकः। कणइल्लो। कणई लतावाची देश्यः, ततो भवार्थेऽस्त्यर्थे वा डिल्लः। वाअडो। वाचाटे द्वितीयस्यातोऽत्॥ (४) मइलपुत्ती पुष्पवती। मलिनशब्दस्य मइलादेशः, तस्मात् पुत्ती॥ (५) दुग्घोट्टो दोग्घोट्टो (६) दूणो द्विपः। पिबतेर्घोट्टः। द्वाभ्या पिबतीति। द्विपाने पकारेण सह इत ऊत्। दूणो॥ (७) विरिचरो धाराविरेचनशीलः॥ (८) सूरल्ली मध्याह्नः। सूरादस्त्यर्थे ल्लिः॥ (९) वेल्लहलो कोमलो विलासी च। वल्लभात् लः, आदेरत एच्च॥ (१०) सद्दालं नूपुरम्। शब्दादालोऽस्त्यर्थे॥ (११) अल्लिल्लो (१२) फुलंधओ

---

29. M om. तूण—घेत्तूण। सोऊण। काऊण॥ अनुस्वारे. T णिहित्ता नन्दित्ता इति for वन्दित्ता इति. 30. T om. बहुलं. S om. from इत्यादयः down to डिल्लः. (1) HD. 7.44. K नूत्नवरः नवो वरः for नूतनवर.. (2) HD. 2.21. ( ) Sk वाचाटः. (4) From मलिन and पोत्त=वस्त्र K मलिनादेशात् मइल्लात् पुत्ती (5) HD. 5.44. M ST om. दोग्घोट्टो. (6) HD 5.44 (7) HD. (विरिंचिरो) 7.93. MT विरिंचिरो for °चरो. (8) HD. 8.57. $T_2$ सुरल्ली for सूरल्ली. (9) HD. 7.96. (10) HD. 8.10. (11) HD (अल्लल्लो) 1 13. (12) HD (फुलंधुओ) 6.85. S पुलंदओ; T पुल्लद्धओ for फुलंधओ.

(१३) रसाओ भ्रमरः। एषा क्रमात् अलेः स्वार्थे डिल्लः,लो द्वित्वं च। पुष्पंधयः पस्य लः। रसमत्तीति रसाओ॥ (१४) लअणी लअणा (१५) कणई लतायाम्। लतायाः स्वार्थे डणी डणा च। कनतेर्भातोः स्त्रिया डई। शोभावहत्वात्॥(१६) वहुज्जा कनीयसी श्वश्रू। वध्वा उक्तेऽर्थे ज्जा। (१७) भाउज्जा भ्रातृवधूः। भ्रातुर्जायार्थे ज्जा॥ (१८) मेहुणिआ मातुलात्मजा स्याली च। मैथुनिका। मिथुनादुक्तेऽर्थे इकण् डाच्च॥ (१९) रिमिणो रोदनशीलः। रुदेः शीले डिमिणः॥ (२०) पुण्णाली (२१) छिच्छई (२२) अडअणा असती। पुंश्चल्या श्चस्य णा। धिक् धिक् छिच्छि। धिग्धिगिति गर्हणा यस्याः सा। अस्त्यर्थे डई। अटेः शीले अणा। अड-अणा अटनशीला। (२३) चप्पलओ मिथ्याबहुभाषी। चपलात्कः, पस्य च द्विरुक्तः पः॥ (२४) पिव्वं जलम्। पिबतेर्द्विर्बः॥ (२५) मघोणो मघवा। स्वार्थे णः, अवा इत्यस्य ओकारः॥ (२६) सइलासिओ मयूरः। सदालासिकः नृत्यशीलत्वात्। 'इत्तु सदादौ' [१-२-३४] इत्यनेन सइ॥ (२७) वाउल्लो प्रलपिता। वाचो डुल्लः॥ (२८) पलहिअओ मूर्खः। उपलहृदयः। उकारस्य लोपः॥ (२९) चण्डिक्को कोपः। चण्डात् कोपे डिक्कः॥ (३०) चण्डिज्जो पिशुनः कोपश्च। चण्डादुक्तेऽर्थे डिज्जः॥ (३१) कुम्मणो म्लानः। म्लायतेः कुम्मादेशे णः॥ (३२) अच्छिहरुल्लो द्वेष्यः। अक्ष्णोर्हरः, अदर्शनीयत्वात्। अक्षिहरात्स्वार्थे डुल्लः॥

---

(13) HD. (रसाऊ) 7.2. (14) HD. ° 7.27. K लअण for लअणी. (15) HD. 2.5. (16) HD. (वहुव्वा?) 7.40. KMST वहुच्चा for °ज्जा. (17) HD. 6.103. M बाहुज्जा for भाउज्जा. (18) HD. 6.148. (19) HD. 7.7. (20) HD. 6.53. (21) Sk धिक् धिक्. (22) HD. 1.18. K om. अटनशीला. (23) HD. 3 20. M चच्चइओ; T छप्फलओ for चप्पलओ. M चचलात्कः for चपलात्कः. (24) HD. 6.46. (25) Sk मघवन्. (26) HD. 8.20. (27) HD.7.56. (28) Sk उपलहृदय°. M पलाहिओ अपहृतहृदय. (29) HD. 3.2. (30) HD. 3.20 K चंडिज्जो पिशुनश्च। चकारात्कोपश्च. (31) HD. 2.40. T कुम्हणो for कुम्मणो. (32) HD. 1.41.

(३३) छाइल्लो रूपवान् । छायाया डिल्लोऽस्त्यर्थे । कान्तिमानित्यर्थः॥ (३४) कुडुंगो कुंगो कुडुक्को लतागृहम् । कुडादुक्तेऽर्थे डुङ्गः डङ्गः डुक्कश्च ॥ (३५) जरण्डो वृद्धः । जरतेरण्डः ॥ (३६) अच्छिविअच्छी परस्पराकृष्टिः । आकर्षति व्याकर्षतीत्यत्र कृषेः स्थाने विअच्छी ॥ (३७) धूमरी तुहिनम् । धूमवत् धूमरी । उपमानार्थे री ॥ (३८) सोत्ती तरङ्गिणी । स्रोतसोऽस्त्यर्थे डी । तस्य द्वित्वम् ॥ (३९) अहिसिओ ग्रहशङ्कया रुदितः । अभिसीदतेः उक्तेऽर्थे डिकः ॥ (४०) गावी गौः । गोः स्त्रिया डावी ॥ (४१) उत्थल्लपत्थल्ला पार्श्वयुगापवृत्तिः । उत्स्थलप्रस्थलात्पार्श्वद्वयापवृत्त्यर्थे डा, लो द्वित्वं च ॥ (४२) गज्जिलिओ स्पृष्टेऽङ्गे हासः पुलकश्च । अङ्गे स्पृष्टे यो हासो जायते तस्मिन् पुलकार्थे च गर्जतेरिलिअः ॥ (४३) चित्तलं रम्यम् । चित्तं लातीति ॥ (४४) पाडहुओ प्रतिभूः । प्रतिभुवः स्वार्थे डुकण्, इतोऽत्वं च ॥ (४५) पासणिओ पासाणिओ साक्षी । साक्षात्पार्श्वे नीयतेऽनेनेति पार्श्वान्नीयतेर्डिकः ॥ (४६) अवरिज्जं अद्वितीयम् । अवरात् भावार्थे डिज्जः ॥ (४७) लाहिल्लो लम्पट । लाभादुक्तेऽर्थे डिल्लः ॥ (४८) कडिल्लं गहनं, दौवारिकः, कटिवस्त्रम्, निर्विवरम्, विपक्षः, आशीश्च । कटिशब्दाद् गहनादिष्वर्थेषु डिल्लः ॥

---

(33) .HD. 3.35. (34) HD. 2.31. M S om. कुडुंगो down to डुक्कश्च. (35) HD. 3.40. (36) HD. 1.41. K कृषेः स्थाने अच्छिविअच्छी. (37) HD. 5.61. K उपमार्थे for उपमानार्थे. (38) HD. 8.44. (39) HD. 1.30. (40) Sk गो. (41) HD. 1.122.M पार्श्वान्नीयते आनीयते चेत्यर्थे for पार्श्वद्वयापवृत्त्यर्थे. (42) HD. (गंजोल्लिअं) 2.100. S गजिलिओ; T गज्जलीओ for गज्जिलिओ. (43) HD. 3.4.(44) HD. (पाडुहुओ). 6.42. KS पाडहुओ; T पालभुओ for पाडहुओ. T प्रतिभूमिः for प्रतिभूः. (45) HD. 6.41. T पाडणीओ for पासणिओ. S साक्षात्कश्चिन्नीयते for साक्षात्पार्श्वे नीयते. (46) HD. 1.36. $T_1$ अवरंजं; $T_2$ अवरज्ज. T अँवरादभावार्थे सिज्जं for अवरात् भावार्थे डिज्जः. (47) Sk लाभ. (48) HD. 2.52. $T_1$ कडिल्ली; $T_2$ कडिल्लः. S वाहनं for गहनं.

(४९) रूव सि णी रूपवती । रूपादस्त्यर्थे स्त्रिया सिणी ॥(५०) कु डु म्बि अं सुरतम् । कुटुम्बादुक्तेऽर्थे डिकः ॥ (५१) अ न्त रि ज्जं रशना कटिसूत्रम् । अन्तरादुक्तेऽर्थे डिज्जः ॥ (५२) अ व डु क्कि अं निपतितं कूपाद्यवटेषु । अवटादुक्तेऽर्थे डुक्किअः ॥ (५३) बु ड्डि रो महिषः । मज्जतेरादेशात् बुड्डात् इरः शीलार्थे ॥ (५४) पि प्पि डि अं यत्किंचित्पठितम् । पिडिपिडीत्यनुकरणात्कः, आदेर्डिकारस्य लुक्, पो द्वित्वं च ॥ (५५) स रि सा हु लो सदृशः । सदृशात्स्वार्थे हुलश् ॥ (५६) गु मि लो मूढः । मुहेरादेशाद्गुमेरिलः॥ (५७) क च्चं कार्यम्। कृञो डच्चः ॥ (५८) घ डि अ घ डा घ डी गोष्ठी । घटिता घटा घटना यस्याः सा ॥ (५९) क म णी निश्रेणी ॥ (६०) कि रि कि रि आ कर्णोपकर्णिका कुतुकं च । कर्णोपकर्णं कर्णपरंपराप्राप्तं कटुजल्पनं तस्मिन्नर्थे कौतुके च किरिकिरीत्यनुकरणात्का ॥ (६१) अ ण्ण इ ओ सर्वत्रार्थे तृप्तः । अर्णवादुपमानार्थे डिकः ॥ (६२) सा हु ली शाखा । स्वार्थे डुलिः ॥ (६३) जं पे क्खि र म ग्गि र ओ यद् दृष्टं याचते । यद् दृष्टमित्यर्थे जंपेक्खिरमिति निपातितात्परो याचनशीले मग्गिरओ कप्रत्ययान्तः ॥ (६४) ग अ सा उ ल्लो विरक्तः । गतस्वादनुरक्तेऽर्थे डुल्लः ॥

---

(49) HD. 7.9. (50) HD. (कुडुम्बिअं) 2.41. (51) HD. 1.35. B दशनाः for रशना. (52) HD. (अवडक्किओ) 1.47. T अवड्ढक्किअ for अवडु°. (53) T पुंसिरो for बुड्डिरो. From बुड्=मज्ज. KST शीले for शीलार्थे. (54) HD. 6,50. KT पिटिपिटी°; M पिडिपिटी° S पटिपटी° for पिडिपिडी°. (55) HD. 8.9. T सारीसाभुलो for सरिसाहुलो. (56) HD. 2.102. T गुम्मिळो for गुमिलो. T मुहादेशात् for मुहेरादेशात्. (57) HD. 2.2. (58) HD. 2.105. T घसिआ घसा for घडिअघडा. (59) HD. 2.8. (60) HD. (किरिइरिआ) 2.61. KM S om. कर्णोपकर्णं. MT कर्णपरपरया प्रयुक्त प्रकटजल्पनं for कर्ण...कटुजल्पनम्. (61) HD. 1.19. Sk अन्नचितः. (62) HD. 8.52. (63) HD. 3.44. M यद्यद्दृष्टं तत्तद्याचते for यद्दृष्टं याचते; T यावद् द्रष्टव्य प्रेक्षितमित्यर्थे for यद्दृष्टमित्यर्थे. (64) HD. (गयसाउलो) 2.87. M S om. from विरक्तः down to सिइंडहिल्लो. K गतेः स्वादादुक्तेर्थे; T हतस्वादुक्तेर्थे for गतस्वादनुरक्तेऽर्थे.

(६५) सिहण्डहिल्लो बालः। शिखण्डादुक्तेऽर्थे हिल्लः। शिखावानित्यर्थः॥ (६६) अलवलवसहो धूर्तो दुष्टः पृष्ठवाही बलीवर्दः। अलमत्यर्थं बलमस्य वृषभस्येति। बिन्दोर्लुक्॥ (६७) खुरहखुडी प्रणयकोपः। क्षुरवद्भाति तोदयतीति तुदेरादेशात् खुडात् डी॥ (६८) सीउल्ली सीउग्गं हिमकाले दुर्दिनम्। शीतात् डुल्लिडुग्गौ, तस्य लोपः॥ (६९) वरण्डो वरणः प्राकारः। वृञो रण्डः॥ (७०) तत्ती तत्परता। तात्परस्य तात्पर्ये डत्ती॥ (७१) हीरणा त्रपा। त्रपार्थे णा हीरादेशश्च॥ (७२) गामरेडो योऽन्तर्भुक्त्वा ग्रामं भुङ्क्ते। ग्रामादुक्तेऽर्थे रेडः॥ (७३) लडहा (७४) वेल्लरी विलासवती। लसतेर्डहा सलोपश्च। वेष्ट्यन्ते विटा अनयेति वेष्टेः परो री, ष्टो ल्लश्च॥ (७५) दुम्मइणी कलहपरा। दुर्मतेः स्वार्थे स्त्रिया णी॥ (७६) लज्जालुइणी लज्जावती। लज्जालोः स्वार्थे णी॥ (७७) तण्णाअं आर्द्रम्। तिम्यतेर्डण्णाअं॥ (७८) चिक्खअणो असहनः। नञ्पूर्वात्सहतेर्यणः, चिक्खादेशश्च॥ (७९) वेणिअं वचनीयम्। वचेरुक्तेऽर्थे डेणिअः॥ (८०) सुण्हसिओ निद्रालुः। स्वप्नात् शीले सिय', प्नस्य च ण्हः, आदेरत उः। यद्वा सास्ना संस्कृते निद्रा। 'स्तावकसास्ने' [१·२·१८] इत्युत्वे सति ततः शीलार्थे डसिअः॥

---

(65) HD. (सिहंडइल्लो). 8.54. T सिहसहिलो. (66) HD. (अलमल) 1.25. M दुर्दान्तः for धूर्तः; T om. धूर्तः. B पृष्ठवाची for °वाही. T बन्ध for बलं. (67) HD. (खुरडुक्खुडी) 2.76. $T_1$ खरखुसी, $T_2$ खरखुडी for खुरहखुडी. (68) Sk शीत. $T_1$ सीअलं; $T_2$ सीदट्टं for सीउग्ग.(69) HD. 7.86. $T_1$ वरीडो; $T_2$ वरीसो for वराडो. (70) HD. 5.20. $T_2$ तत्तं. (71) HD. 8.67. T सीरणा for हीरणा. M ह्रियः स्वार्थे णा for त्रपार्थे णा (72) HD. (गामरोडो) 2.90. BT ग्रामे for ग्रामं. (73) HD.7.17. $T_1$ रिसभा;$T_2$ रउभा for लडहा.(74)HD. 7.76. (75) HD, 5.47. M दुम्मलणी for दुम्मइणी. (76) Sk. B लज्जालुणी for लज्जालुइणी. (77) HD. (तण्णायं). 5.2. (78) ? (79) HD. 7.75. (80) HD. 8*39. $T_2$ सुब्भडिओ. M om. from यद्वा सास्ना down to डसिअः.

(८१) वप्पिओ केदारः। उप्यन्तेऽत्रेति वपेः पिअः॥ (८२) बन्धोल्लो मेलकः। बन्धेर्डोल्लः॥ (८३) वारिज्जो विवाहः। वृञ इज्जण्।'अचो ञ्णिति' इति वृद्धिः॥ (८४) साउल्लो (८५) हडहडं अनुरागः। स्वादेरुक्तेऽर्थे ल्लः। हडत् हडदिति हृदयं स्फुरति यत्रेति। तस्य लुक्॥ (८६) माणंसी मायावी मनस्वी च॥ (८७) कोडिल्लो कोडिओ पिशुनः। कुडेर्धातोरिल्लइकौ, उत ओच्च॥ (८८) अट्टण्णो आर्तज्ञः। आर्तं जानातीति॥ (८९) गञ्जोलो। गञ्जतेः परिभवार्थे देश्याद्धातोर्डोलः॥ (९०) वन्दिणो बन्दी। स्वार्थे णः॥ (९१) तत्तिल्लो तच्छीलः। तत्ती तत्परता, ततोऽस्त्यर्थे लः, लो द्वित्वम्॥ (९२) ऊसुम्भिअं रुद्धगलरोदनम्। उत्पूर्वस्य सुम्भतेरुक्तेऽर्थे डिकः॥ (९३) णिउक्को तूष्णीकः मूकः। निर्मुक्तः। मस्य लुक्, दैवादिपाठाद् द्वित्व च॥ (९४) बंहलो अपस्मारः। ब्रह्मण उक्तेऽर्थे लः॥ (९५) ठाणिज्जं गौरवम्। स्थानादुक्तेऽर्थे डिज्जः॥ (९६) उवउज्जो उपकारी। उपकृञो डुज्जः॥ (९७) एक्कलो प्रबलः। एकादुक्तेऽर्थे लः॥ (९८) माउसिआ माउच्छा मातृष्वसा। मातुः परस्य स्वसुः सिआच्छौ॥ (९९) महल्लो मुखरः। महतो डल्ल॥ (१००) कुच्छिमई गर्भवती। कुक्षेरस्त्यर्थे मई॥ (१०१) रिञ्छोली ऋक्षालिः नक्षत्रमाला, तद्वत् रिञ्छोली। ऋतो बिन्दुः॥

---

(81) HD. (वप्पिणो) 7.85. (82) HD. 6.89. (83) HD. 7.55. BS इज्जाणा for इज्जण्. (84) HD. 7.55. (85) HD. 8.74. M भगत्; T भटत् for हडत्. T₁ स्फुटति for स्फुरति (86) HD. 6.147. T माणंसिणी माणंसी. (87) HD. 2.40. T कटेर्धतोः for कुडेर्धातोः. (88) Sk आर्तज्ञ. T आवण्णो आपज्ञः. (89) HD. (गजिल्लो) 2.83. T गंजालो गुंजालो for गञ्जोलो. (90) Sk. T विदिण्णो विदी (91) HD. 5.3. (92) HD. 1.142. (93) HD. 4 51. (94) ? S बह्मलो, T वह्मलो for बंहलो. (95) HD. 4.5 M ठाणेज्ज; T ठाणेज्जा for ठाणिज्ज. (96) HD. 1.108. KS उपपूर्वात्कृञो for उपकृञो. (97) Sk. (98) HD. (माअलिआ) 6.131. T माउच्चा for ॰च्छा. T सिआच्चौ for सिआच्छौ. (99) HD. 6.143. M महुल्लो for महल्लो. (100) HD. 2.41. (101) HD. 7.7. T रिच्चोळी for रिञ्छोली.

(१०२) घो र णी पंक्तिः। धारावत् घोरणी। आत ओ, उपमार्थे डणी च ॥ (१०३) प ड मा दूष्यपटम्। पटादस्त्यर्थे मा॥ (१०४) जु अ णो युवा। स्वार्थे णः ॥ (१०५) क र म री हठहृता स्त्री बन्दी। करेण मृद्यमानादाकृष्यत इत्यर्थे करोपपदाद् मृद्नातेर्डरी॥ (१०६) द ड्ढा ली दववर्त्म दवाग्निमार्ग.। दग्धात् डाली॥ (१०७) कु ड ङ्गो कु ड ओ लतागृहम्। कुटीशब्दादुक्तेऽर्थे डङ्गडकौ॥ (१०८) का रि मं कृत्रिमम्। कृञो डारिमः॥ (१०९) जं घा लु ओ (११०) ज घा म ओ दूतः। जङ्घायाः शीघ्रेऽर्थे लुअमऔ॥ (१११) ब ला मो डी बलात्कारः। बलान्मुच्यते यत्नेति॥ (११२) च क्क लं परिवर्तुलम्। चक्राल्लः॥ (११३) बा उ ल्ली पुत्रिका कुमारीक्रीडोचिता सालभञ्जिका। कुमारीर्व्यापारयतीति व्याप्रेर्डुलि.॥ (११४) म त्त वा लो मत्तः। स्वार्थे वालः॥ (११५) व हु णि आ ज्येष्ठभ्रातृवधूः। वध्वा उक्तेऽर्थे णिआ॥ (११६) जं भ णं भ णो स्वैरभाषणः। यद्वा तद्वा भणत्यधिकमिति। आदितृतीयाभ्यामनुस्वारः, तलोपश्च॥ (११७) भा इ रो भे ज्ज लो भे ज्जो (११८) ओ ज्ज रो भीरुः। भियः शील इत्यर्थे डाइरडेज्जलडेज्जाः, त्रसेरादेशात् ओज्जाच्च रः॥ (११९) आ हु डं सीत्कारः। आहरति आदत्ते प्रियहृदयमिति। आहृञो डः॥ (१२०) का अ पि उ ला कोकिला। काकः पितृवत्पोषको यस्या इत्यर्थे काकपितृशब्दात् ला॥ (१२१) मु ह ल मुखम्। स्वार्थे लः॥ (१२२) ग त्त डी गायिका। गात्रीशब्दात्स्वार्थे डडी॥

---

(102) Sk. (103) HD (पडवा) 6.6. M दूष्यपटकुटी, T दूष्या पटकुटी for दूष्यपटम्. (104) Sk युवन् (105) HD. 2.15. T किरिमरी for करमरी. M मृद्यमाना कृष्यते; T मर्द्यमाना कृष्यते for मृद्यमानादाकृष्यते (106) Sk दग्धाली. (107) HD. 2.31. T कुडुक्को for कुडंगो. (108) HD. 2.27. (109) HD. 3.42. (110) HD. 3.42. (111) HD. 6.92. (112) HD. 3.20. $T_1$ चग्गळं; $T_2$ चब्भळं for चक्कलं. (113) HD. 6.92. T बाउळ्ळं. (114) HD. 6.122. (115) HD. (वहुण्णी). 7.41. T बहुणीआ for वहुणिआ. (116) HD. (जभणवो) 3.44. (117) HD. 6.107. T भाउरो for भाइरो Tom. भेज्जो. (118) HD. (ओज्जल्लो) 1.154. S वजोले; T वोजरो for ओज्जरो. (119) HD. (आहुडं). 1.74. KMS शीत्कृतं for सीत्कारः. (120) HD. 2.30. T पुत्रवत् for पितृवत् (121) HD. 6.134. (122) HD. 2.82.

(१२३) दु द्दो ल णा दुग्धापि या दुह्यते गौरित्यत्रार्थे दुग्धात् दोलणा ॥(१२४) मा भा इ अभयम् । भियो भादेशान्मापूर्वात् इः॥ (१२५) तो म रि ओ शस्त्र-प्रमार्जकः।तोमरादुक्तेऽर्थे डिकः॥ (१२६) व हु हा डि णी वध्वा उपरि परिणीयते इति वध्वा उक्तेऽर्थे हाडिणी ॥ (१२७) रु अ रु इ आ उत्कलिका । रुहरुहिका-शब्दे हकारयोर्लुक् ॥ (१२८) पि उ सि आ पि उ च्छा पितृष्वसा । पितुः परस्य स्वसुः सिआच्छौ ॥(१२९) पु प्फी पितुः परस्य स्वसुः फी च ॥ (१३०) अ णु सू आ आसन्नप्रसवा । अनुसूतेरासन्नप्रसवार्थे डा ॥ (१३१) भ च्चो भगिनीसुतः । भगिन्याः सुतेऽर्थे च्चः, भादेशश्च ॥ (१३२) ओ ह ल्ली अप-सृतिः । सृतेर्हल्ली ॥ (१३३) म म्म क्को गर्वः। मर्मणः उक्तेऽर्थे क्कः॥ (१३४) म ड प्प रो मधुपरः । उतोऽत्, धो डश्च ॥ इत्यादि ॥ कृष्टानुपसर्गघृष्टवाक्य-विद्वस्वाचस्पतिविष्टरश्रवःप्रचेतःप्रोक्तादीना क्विबादिप्रत्ययान्ताना च अग्निचि-त्सोमसुदित्यादीना सुग्लौ सुम्लौ इत्यादीना च पूर्वविद्वाद्भिरप्रयुक्ताना प्रतीतिवैषम्य-करः प्रयोगो न कर्तव्यः । शब्दान्तरैरेव तदर्थोऽभिधेयः । यथा—कृष्टः कुशलः । वाचस्पतिः गुरुः । विष्टरश्रवाः हरिः । इत्यादि ॥ घृष्टशब्दस्य सोपसर्गस्य प्रयोग इष्यत एव । मन्दरअडपरिघट्ठ, मन्दरतटपरिघृष्टम् । तं दिअसणिघट्ठाणं इत्यादि ॥ ३० ॥

**अव्ययम् ॥ ३१ ॥**

अधिकारोऽयमा पादपरिसमाप्तेः। इतः परं ये वक्ष्यन्ते ते अव्ययसंज्ञका ज्ञातव्याः ॥ ३१ ॥

---

(123) HD. (दुद्धोलणी). 5.46. (124) HD. 6.129. T माहाई for माभाइ. (125) HD. 5.18. B शस्त्री प्रमार्जकः; T शास्त्रप्रमार्जकः. (126) HD. 7,50. T बहुभासिणी for बहुहाडिणी. (127) HD. 7.8. (128) Sk. पितृष्वसा. (129) HD. (पुप्फा). 6.52. (130) HD. 1.23. $T_1$ अणेपिआ; $T_2$ अणेडिआ for अणुसूआ. (131) Sk ? (132) Sk अपसृतिः. (133) HD. 6.143. (134) HD. (मडप्फरो) 6.120. S मडुपलो for मडप्परो. MT मदस्फुरः for मधुपरः. KM आर्यैः कविभिः, T पूर्वविद्भिः for पूर्ववि-द्वाद्भिः. KMT °वैषम्यपरः for °वैषम्यकरः. KS तंदिशश° for दिअस°. M °णिहट्ठाणं for °णिघट्ठाणं. Before Sūtra. 31 Bp K read अथाव्ययानि. MS अतः परं for इतः परं.

**आम अभ्युपगमे ॥ ३२ ॥**

आम इत्यव्ययमभ्युपगमे प्रयोज्यम् । आम बहुला वणाली ॥ आम संस्कृतेऽपीति केचित् ॥ ३२ ॥

**तं वाक्योपन्यासे ॥ ३३ ॥**

तं इत्यव्ययं वाक्योपन्यासे प्रयोज्यम् । तं तिअसबन्दिमोक्खं ॥ ३३ ॥

**णइ चेअ चिअ च्च एवार्थे ॥ ३४ ॥**

णइ चेअ चिअ च्च इत्येते अवधारणार्थे प्रयोज्याः । गइओ णइ । गदित एव ॥ जं चेअ मुउलणं लोअणाणं अणुबन्धं तं चिअ कामिणीणं । यदेव मुकुलनं लोचनानामनुबन्ध तदेव कामिनीनाम् ॥ दैवादिपाठाद् द्वित्वम् । ते च्चिअ धण्णा ते च्चिअ सुउरिसा । त एव धन्यास्त एव सुपुरुषाः ॥ सो च्च वअरूवेण । स एव वयोरूपेण ॥ सो च्च सीले । स एव शीले ॥ ३४ ॥

**हद्धि निर्वेदे ॥ ३५ ॥**

हद्धि इति निर्वेदे प्रयोज्यम् । हाधिक्शब्दवत् हद्धि । हद्धि हो धावह । हा धिक् हो धावत ॥ ३५ ॥

**दर अर्धेऽल्पे वा ॥ ३६ ॥**

दर इत्यव्ययमर्धार्थे ईषदर्थे वा प्रयोज्यम् । दरविअसिअं अर्धमीषद्वा विकसितम् ॥ ३६ ॥

**किणो प्रश्ने ॥ ३७ ॥**

किणो इत्यव्ययं प्रश्ने वा प्रयोज्यम् । किणो धुवसि, किं धुवसि, किं धूनोषि ॥ ३७ ॥

---

32. KMS अभ्युपगमे आम for the Sūtra. K अभ्युपगमेऽपि for °पगमे. KMS प्रयोक्तव्यम् for प्रयोज्यम् here and elsewhere. 33. B दिअसबादिमोक्खं for तिअस°. 35. KM निर्वेदे हद्धि इति for हद्धि इति निर्वेदे. B णो धामह for हो धावह. 37. Before किणो in Com. MS read वेत्यनुवर्तते. MS om. अव्ययं.

**मिव पिव विव विअ व व्व इवार्थे ॥ ३८ ॥**

मिव पिव विव विअ व व्व इति षडेते इवार्थे वा प्रयोज्याः । कमलं मिव । चन्दणं पिव । हंसो विव । जीवो विअ । उअअस्स व ताविअसीअलस्स, उदकस्येव तापितशीतलस्य । साअरो व्व गहिरो, सागर इव गभीरः । साअरो व्व खारओ, सागर इव क्षारः ॥ पक्षे णीलुप्पलमाला इव, नीलोत्पलमालेव ॥ ३८ ॥

**किर इर हिर किलार्थे ॥ ३९ ॥**

किर इर हिर इति त्रयः किलार्थे वा प्रयोज्याः । कल्लं किर खलहिअओ । तस्स इर पिअवअस्सो । वाहित्ता हिर देवी ॥ पक्षे । एव्वं किल तेण सिविणए भणिअं ॥ ३९ ॥

**अम्हो आश्चर्ये ॥ ४० ॥**

आश्चर्ये अम्हो इति प्रयोज्यम् । अम्हो देवस्स गई । अम्हो कह परिणिज्जइ ॥ ४० ॥

**अब्भो पश्चात्तापसूचनादुःखसंभाषणापराधानन्दादरखेदविस्मयविषादभये ॥ ४१ ॥**

अब्भो इति पश्चात्तापादिषु प्रयोज्यम् । पश्चात्तापे--अब्भो तह तेण कआ अहअं जह कस्स साहेमि ॥ सूचनायाम्—अब्भो दुक्करआरअ । अब्भो आरद्धो ॥ दुःखे—अब्भो दलइ हिअअं ॥ संभाषणे—अब्भो किमिणं ॥ अपराधे—अब्भो हरन्ति हिअअं तह विव वेसा भवन्ति जुवईणं ॥ आनन्दे—अब्भो सुप्पहाअमिणं ॥ आदरे—अब्भो मह सफलं जीविअं ॥ खेदे—अब्भो ण जाणामि चित्तं ॥ विस्मये—अब्भो किं पि रहस्सं मुणन्ति धुत्ता जणब्भहिआ, किमपि रहस्यं जानन्ति धूर्ता जनाभ्यधिकाः ॥ विषादे—अब्भो णासेन्ति धिइं पुलअं वड्ढेन्ति देन्ति रणरणअं, नाशयन्ति धृतिं पुलकं वर्धयन्ति ददति रणरणकम् ॥ भये—अब्भो गइअम्हि तुमे णवरज्जइ सा ण जूरिहइ, अब्वो गदितास्मि त्वया नैव रज्येत सा न खेद्यते ॥ ४१ ॥

---

38.KMST om. साअरो व्व गहिरो. 40. KMS अम्मो for अम्हो in the Sūtra and Com. 41. KMS अब्बो; T अंबो for अब्भो in the Sūtra and Com.

**हुं पृच्छादाननिवारणे ॥ ४२ ॥**

हुं इति पृच्छादिषु प्रयोज्यम्। पृच्छायाम्—हुं साहसु सब्भावं ॥ दाने—हुं गेण्ह अप्पणो विअ ॥ निवारणे—हुं णिल्लज्ज समोसर ॥ ४२ ॥

**वणे निश्चयानुकम्प्यविकल्पे ॥ ४३ ॥**

वणे इति निश्चयादौ प्रयोज्यम्। निश्चये—वणे देमि, निश्चयं ददामि ॥ विकल्पे—वणे होइ ण होइ, भवति वा न भवति ॥ अनुकम्प्ये—होइ दासो वणे ण मुच्चइ, भवति दासोऽनुकम्प्यो न मुच्यते ॥ ४३ ॥

**संभावने अइ च ॥ ४४ ॥**

अइ इति, चकारात् वणे इति च, संभावने प्रयोज्यम्। अइ दिअर किं ण पेच्छसि। णत्थि वणे जं ण देइ विहिपरिणामो ॥ ४४ ॥

**आनन्तर्ये णवरिअ ॥ ४५ ॥**

णवरिअ इत्यानन्तर्ये प्रयोज्यम्। णवरिअ से रहुवइणो, अनन्तरमस्य रघुपतेः ॥ ४५ ॥

**केवले णवर ॥ ४६ ॥**

केवलेऽर्थे णवर इति प्रयोज्यम्। णवर पिआइं चिअ णिव्वडन्ति, केवलं प्रियाण्येव निष्पतन्ति पृथग्भवन्ति ॥ केचित्तु 'केवलानन्तर्ययोर्णवर-णवरिअ' इत्येकमेव सूत्रमाहुः। तन्मते उभावप्युभयार्थौ ॥ ४६ ॥

**भन्द ग्रहणार्थे ॥ ४७ ॥**

भन्द इति ग्रहणार्थे प्रयोज्यम्। भन्द ओलोएसु मं। गृहाणेत्यर्थः॥४७॥

**भन्दि विकल्पविषादसत्यनिश्चयपश्चात्तापेषु च ॥ ४८ ॥**

भन्दि इति विकल्पादिषु ग्रहणार्थे च प्रयोज्यम्। विकल्पे—भन्दि भोज्ज एत्ताहे, भवेदिदानीम् ॥ विषादे—भन्दि चरणे तओ संमाणिओ, चरणौ ततः संमानितौ ॥ सत्ये—भन्दि तुह भणिमो ॥ निश्चये—सासिज्जइ भन्दि तुह कज्जे ॥ पश्चात्तापे—भन्दि सहेहि धरणि ॥ ग्रहणार्थे—भन्दि आलोएसु मं ॥ ४८ ॥

---

42. T भुं for हुं. 47. M हंद for भन्द in the Sūtra and Com. 48. K भंदि तुज्झ for भोज्ज.

**संभाषणरतिकलहे रे अरे ॥ ४९ ॥**

संभाषणरतिकलहयोर्यथासंख्यं रे अरे इत्येतौ प्रयोज्यौ । संभाषणे—रे रे हिअअ मडअसरिसा ॥ रतिकलहे—अरे बहुवल्लह मए समं मा करेसु उवहासं ॥ ४९ ॥

**हरे क्षेपे च ॥ ५० ॥**

क्षेपे चकारात्संभाषणरतिकलहयोर्यथासंख्यं हरे इति प्रयोज्यम् । क्षेपे—हरे णिल्लज्ज ॥ संभाषणे—हरे पुरिसा ॥ रतिकलहे—हरे बहुवल्लह ॥ ५० ॥

**धू कुत्सायाम् ॥ ५१ ॥**

कुत्साया धू इति प्रयोज्यम् । धू णिल्लज्जो लोओ ॥ ५१ ॥

**ऊ गर्हाविस्मयसूचनाक्षेपे ॥ ५२ ॥**

गर्हादिषु ऊ इति प्रयोज्यम् । गर्हायाम्—ऊ णिल्लज्ज । विस्मये—ऊ कहं मुणिआ अहं ॥ सूचने—ऊ केण ण विण्णाअं ॥ प्रक्रान्तवाक्यस्य विपर्यासशङ्कया विनिवर्तनलक्षण आक्षेपः । तत्र—ऊ किं मए भणिअं ॥५२॥

**पुणरुत्तं कृतकरणे ॥ ५३ ॥**

पुणरुत्तं इति कृतकरणे प्रयोज्यम् । अइ सुव्वइ पंसुलि णीसहेहिं अङ्गेहिं पुणरुत्तं, अयि स्वपिषि पासुले निःसहैरङ्गैः कृतकरणम् ॥ ५३ ॥

**हु खु निश्चयविस्मयवितर्के ॥ ५४ ॥**

हु खु इत्येतौ निश्चयादिषु प्रयोज्यौ । निश्चये—तं पि हु अच्छिण्णसिरं, तं खु सिरीएँ रहस्सं ॥ विस्मये—को खु एसो सहाससिरो ॥ वितर्क ऊहः संशयो वा । ऊहे—न हु नवरसग्गहिआ एअं खु हसइ ॥ संशये—जलधरो खु धूमो खु ॥ संभावने चेष्यते—तरिउं ण हु णवर इमं । एअं खु तुमं हसइ ॥ बहुलाधिकारादनुस्वारात्परो हु न प्रयोक्तव्यः ॥ ५४ ॥

---

49. BT भवभासि for उवहासं. 51. KS थू for धू in the Sūtra and Com. 53. K सुव्रते पासुले for स्वपिषि पासुले.

**णवि वैपरीत्ये ॥ ५५ ॥**

णवि इति वैपरीत्ये प्रयोज्यम् । णवि लोअणो ॥ ५५ ॥

**वेव्वे विषादभयवारणे ॥ ५६ ॥**

वेव्वे इति विषादादौ प्रयोज्यम् । विषादे—उल्लाविरीइ वेव्वेत्ति तीएँ भणिअं ण विम्हरिमो । किमुल्लापयन्त्या उत खिद्यमानया त्वया वेव्वे इति भणितं न विस्मरामः ॥ भये—वेव्वे पलाइदं तेण ॥ वारणे—उल्लाविरीइ वि तुमं वेव्वे त्ति मयच्छि किं णेअं ॥ उल्लाविरीइ इति स्वप्नायातम् ॥ ५६ ॥

**आमन्त्रणे वेव्वे च ॥ ५७ ॥**

वेव्वे इति चामन्त्रणे प्रयोज्यम् । वेव्वे गोले । वेव्वे मुरन्दले वहसि पाणिअं ॥ ५७ ॥

**वा सख्या मामि हला हले ॥ ५८ ॥**

आमन्त्रण इति वर्तते । सख्या आमन्त्रणेऽर्थे मामि हला हले इति प्रयोज्याः । मामि सरिसक्खराण वि । पणवह माणस्स हला । हला सउन्दले । हले हआसे ॥ पक्षे । सहि एरिस च्चिअ गई ॥ ५८ ॥

**दे संमुखीकरणे च ॥ ५९ ॥**

संमुखीकरणे सख्या आमन्त्रणे च दे इति प्रयोज्यम् । दे पसिअ णिअत्तसु सुन्दरि, यावत्प्रसीद निवर्तस्व सुन्दरि । दे सहि ॥ ५९ ॥

**ओ पश्चात्तापसूचने ॥ ६० ॥**

पश्चात्तापे सूचनाया च ओ इति प्रयोज्यम् । पश्चात्तापे—ओ पच्चाअन्तिआए ॥ सूचनायाम्—ओ अविणयतत्तिल्लो ॥ परिकल्पार्थे उतादेशेन ओकारेणैव सिद्धम् । ओ विरएमि णहअले ॥ ६० ॥

---

55. M भाअणो for लोअणो. 56. B बेव्वे; M बेंबे for वेव्वे in the Sūtra and Com. M om. उल्लाविरीइ इति स्वप्नायातम्. 57. T आमंत्रणेषु in the Sūtra. B बेब्बे; T बब्बे for वेव्वे. BT बेब्बे मुकुरं रेहसि पाणी क्कांबा (?) 58. BT सरिसक्खराणि; M सहि सक्खिराण वि for सरिसक्खराण वि. BT माण सहला for माणस्स हला. 59. M आमन्त्रणकरणे for °मन्त्रणे. BT णिवत्तइ. T om. दे सहि. 60. M विकल्पार्थे for परिकल्पार्थे.

**अण णाइं नञर्थे ॥ ६१ ॥**

नञर्थे अण णाइं इत्येतौ प्रयोज्यौ । अणचिन्तिअं मुणन्ति, अचिन्तितं जानन्ति । णाइं करेमि रोसं, न करोमि रोषम् ॥ ६१ ॥

**निश्चयनिर्धारणे वले ॥ ६२ ॥**

निश्चये निर्धारणे च वले इति प्रयोज्यम् । निश्चये—वले सीहो, सिंह एवायम् ॥ निर्धारणे—वले पुरिसो धणंजओ खत्तिआणं, पुरुषो धनंजय एव क्षत्रियाणाम् ॥ ६२ ॥

**मणे विमर्शे ॥ ६३ ॥**

विमर्शे मणे इति प्रयोक्तव्यम् । मणे सूरो, किस्वित्सूर्यः अन्ये मन्ये इत्यर्थमपीच्छन्ति ॥ ६३ ॥

**माइं मार्थे ॥ ६४ ॥**

माइं इति मार्थे प्रयोक्तव्यम् । माइं काहीअ रोसं, मा कार्षीद् रोषम् ॥ ६४ ॥

**अलाहि निवारणे ॥ ६५ ॥**

अलाहीति निवारणे प्रयोज्यम् । अलाहि विसाएण, अलं विषादेन ॥ ६५ ॥

**लक्षणे जेण तेण ॥ ६६ ॥**

लक्षणे जेण तेण इत्येतौ प्रयोज्यौ । भमररुअं जेण कमलवणं । भमररुअं तेण कमलवणं ॥ ६६ ॥

**त्वोदवापोताः ॥ ६७ ॥**

अव अप इत्येतावुपसर्गौ उत इति विकल्पार्थो निपातश्च ओ इति तु प्रयोक्तव्याः । ओआरो अवतारः अपकारो वा । ओ विरएमि णहत्थले, उत विरचयामि नभःस्थले । पक्षे अवआरो इत्यादि ॥ ६७ ॥

---

63. BT इत्थमपीच्छन्त्यन्ये for अन्ये मन्ये इत्यर्थमपीच्छन्ति. 64. B माइ; T माउ for माइं in the Sūtra and Com. 65. KM अलाहि किं वाइएण लोहेण, अलं किं वाचिकेन लोभेन for अलाहि विसाएण, अलं विषादेन. 67. T अवकारः for अवतारः. KMT णहअले for णहत्थले.

**उ ओ उपेः ॥ ६८ ॥**

उप इत्युपसर्गः उ ओ इति द्विधा प्रयोक्तव्यः । उआरो ओआरो उपकारः ॥ ६८ ॥

**प्रत्येकमः पडिएक्कं पाडिक्कं ॥ ६९ ॥**

प्रत्येकमित्यस्यार्थे पाडिएक्कं पाडिक्कं इति तु प्रयोक्तव्यम् । पाडिएक्कं । पाडिक्कं ॥ पक्षे पच्चेअं ॥ ६९ ॥

**स्वयमोऽर्थे अप्पणा ॥ ७० ॥**

स्वयमित्यस्यार्थे अप्पणा इति तु प्रयोक्तव्यम् । विसअं विअसन्ति अप्पणा कमलवणा ॥ पक्षे । सअं चिअ मुणसि करणिज्जं, स्वयमेव जानासि करणीयम् ॥ ७० ॥

**एक्कसरिअं झटिति संप्रति ॥ ७१ ॥**

झटित्यर्थे संप्रत्यर्थे च एक्कसरिअं इति तु प्रयोज्यम् । एक्कसरिअं झटिति संप्रति वा ॥ पक्षे । झत्ति । संपइ ॥ ७१ ॥

**इहरा इतरथा ॥ ७२ ॥**

इहरा इति इतरथार्थे प्रयोज्यम् । इहरा नीसामन्नेहिं । पक्षे । इअरहा ॥ ॥ ७२ ॥

**मुधा मोरउल्ला ॥ ७३ ॥**

मुधार्थे मोरउल्ला इति तु प्रयोज्यम् । मोरउल्ला ॥ पक्षे मुहा ॥ ७३ ॥

**अयि ऐ ॥ ७४ ॥**

अयि इत्यर्थे ऐ इति तु प्रयोज्यम् । ऐ बीहेइ । ऐ उम्मत्तिए ॥ अत एव वचनादैकारस्यापि प्राकृते प्रयोगः ॥ ७४ ॥

---

69. पडिएक्कं for पाडिक्क in the Sūtra and Com. 70. M स्वयं अप्पणो; T स्वयमप्पणा for the Sūtra. 72. BT णिसामतेहिं for नीसामन्नेहिं. 74. K बीहेमि for बीहेइ.

**उअ पश्य ॥ ७५ ॥**

पश्य इत्यर्थे उअ इति प्रयोज्यम्। उअ णिच्चलणिप्फन्दा। पक्षे ओअच्छादयः पश्यंत इत्यर्थ ॥ उवह इति च दृश्यते। उवह गोट्ठनज्झम्मि ॥७५॥

**इजेराः पादपूरणे ॥ ७६ ॥**

इ जे र इत्येते पादपूरणे प्रयोज्याः। णअणा इ। अच्छी इ। अण्णेक्क इ। रूवं तु जे गब्भइ। कलमगोवी र ॥ अहो हंहो हा नाम हे इत्यादयः संस्कृतसमत्वेन सिद्धाः ॥ ७६ ॥

**प्याद्याः ॥ ७७ ॥**

प्यादयो नियतार्थवृत्तयः प्राकृते प्रयोज्याः। पि अपीत्यर्थे ॥ ७७ ॥

इति श्रीमदर्हनन्दित्रैविद्यदेवश्रुतधरश्रीपादप्रसादासादितसमस्तविद्याप्रभाव-

श्रीमत्त्रिविक्रमदेवविरचितप्राकृतव्याकरणवृत्तौ

द्वितीयाध्यायस्य प्रथमः पादः ॥

---

77. MT व्याद्याः for प्याद्याः in the Sūtra. M वि अपीत्यर्थे; T वि अप्यर्थे for पि अपीत्यर्थे. Colophon; BKM om. from °मदर्ह down to श्रीमत्. MT द्वितीयस्याध्यायस्य for द्वितीयाध्यायस्य.

## द्वितीयः पादः ॥

**वीप्सार्थात्तदचि सुपो मस्तु ॥ १ ॥**

वीप्सार्थात्पदात्परस्य सुपः स्थाने तदचि तस्य वीप्सार्थस्य संबन्धिन्यचि परे मो वा भवति । एकैकम् एक्कमेक्कं । एकैकेन एक्कमेक्केण । अङ्गे अङ्गे अङ्ग-मङ्गम्मि ॥ पक्षे । एक्केक्कं इत्यादि ॥ १ ॥

**अमः ॥ २ ॥**

सुप इत्यनुवर्तते । नाम्नः परस्य सुपः संबन्धिनोऽमः द्वितीयैकवचनस्य स्थाने मकारो भवति । वच्छं । मालं । गिरिं । गोरिं । गामणिं । तरुं । वहुं ॥ २ ॥

**श्लुग्जश्शसोः ॥ ३ ॥**

नाम्नः परयोर्जस् शस् इत्येतयोर्लुग्भवति । शित्त्वात्पूर्वस्याचो दीर्घः । वच्छा । माला । गिरी । गोरी । गामणी । तरू । वहू चिट्ठन्ति पेच्छ वा ॥ ॥ ३ ॥

**णशामः ॥ ४ ॥**

नाम्नः परस्य षष्ठीबहुवचनस्य आमः णश् इत्यादेशो भवति । शित्त्वा-त्पूर्वस्य दीर्घः । वच्छाण । वणाण । मालाण । गङ्गाण । गिरीण । दहीण । बुद्धीण । गामणीण । सुधीण । गोरीण । तरूण । महूण । वहूण ॥ 'क्त्वासु-पोस्तु सुणात्' [ १·१·४३ ] इति वानुस्वारे वच्छाणं गिरीणं इत्यादि ॥४॥

---

1. M om. वा. KS भवति तु for वा भवति. KM om. एकैकेन. B अग्गे अग्गे अग्गमग्गम्मि for अङ्गे अङ्गे अङ्गमङ्गम्मि. S पक्षे एक्कमेक्क इत्यादि for पक्षे एक्केक्कं इत्यादि. 2. K गामिणिं for गामणिं. After वहुं K adds पेच्छ वा; S adds पेच्छ. 3. T om. श्लुक्. in the Sūtra. 4. MS ण for णश् in the Sūtra and Com. S om. आमः. M om. वहूण. KMS om. मालाणि गङ्गाण; T om. मालाण. KM om. सुधीण, S बुद्धीण for सुधीण. After वच्छाणं KS add वणाणं गङ्गाणं.

**हिं हिँ हि भिसः ॥ ५ ॥**

नाम्नः परस्य भिसः सबिन्दुः सानुनासिकः केवलश्च हिर्भवति। वच्छेहिं वच्छेहिँ वच्छेहि। धणेहिं धणेहिँ धणेहि। मालाहिं मालाहिँ मालाहि। गिरीहिं गिरीहिँ गिरीहि। बुद्धीहिं बुद्धीहिँ बुद्धीहि। दहीहिं दहीहिँ दहीहि। गामणीहिं गामणीहिँ गामणीहि। गोरीहिं गोरीहिँ गोरीहि। तरूहिं तरूहिँ तरूहि। घेणूहिं घेणूहिँ घेणूहि। वहूहिं वहूहिँ वहूहि। महूहि महूहिँ महूहि। इत्यादि ॥ ५ ॥

**हिंतोत्तोदोदु ङसिस् ॥ ६ ॥**

नाम्नः परो ङसिस् पञ्चमीविभक्तिः हिंतो, द्विरुक्तस्तो, दो, दु इति चतुर आदेशानापद्यते। वच्छाहिंतो 'भिस्भ्यस्सुपि' [ २·२·२१ ] इत्येत्वे वच्छेहिंतो। वच्छत्तो। वच्छादो। वच्छादु। वृक्षात् वृक्षेभ्यो वा ॥ दहीहिंतो दहित्तो। दहीदो। दहीदु ॥ गोरीहिंतो। गोरित्तो। गोरीदो। गोरीदु ॥ तरूहिंतो। तरुत्तो। तरूदो। तरूदु ॥ महूहिंतो। महुत्तो। महूदो। महूदु ॥ घेणूहिंतो। घेणुत्तो। घेणूदो। घेणूदु ॥ दो दु इत्यत्र दकारो भाषान्तरार्थः। तेन शौरसेनीमागध्योः—मलअकेदूदो मलअकेदूदु मलयकेतोः। पैशाच्यां 'तल्तदोः' (३·२·४६) इति तकारार्थम्। गिरीतो ॥ एवं धनमालागिरि-बुद्धिग्रामणीतरुवधूप्रभृतयः ॥ ६ ॥

**सुंतो भ्यसः ॥ ७ ॥**

पञ्चमीबहुवचनस्य सुंतो इत्यादेशो भवति। वच्छासुंतो वच्छेसुंतो। धणासुंतो धणेसुंतो। मालासुंतो। गिरीसुंतो। दहीसुंतो। बुद्धीसुंतो। गाम-णीसुंतो। इत्यादि ॥ ७ ॥

---

5. KS सानुस्वारः; M अनुस्वारः for सबिन्दुः. KM use the sign for anunāsika here only, M om. घेणूहिं down to इत्यादि. 6. KMST भ्यस्येत्वे for भिस्भ्यस्सुपि इत्येत्वे. KMT वच्छाओ वच्छाउ and similraly for other words. for वच्छादो वच्छादु. T भाषान्तरार्थं for °रार्थः. T om. from पैशाच्यां down to प्रभृतयः. 7. KMT om. मालासुंतो. After गामणीसुंतो KM add गोरीसुंतो तरूसुंतो महूसुंतो वहूसुंतो K वच्छादु for वच्छाउ. K धणादु for धणाउ. K om. गोरीओ गोरित्तो गोरीउ गोरीहिंतो गोरीहि.

**दिर्दोत्तोदु ङसौ ॥ ८ ॥**

पञ्चम्यादेशेषु दो त्तो दु इत्येषु ङसि पञ्चम्येकवचने च परे पूर्वस्याचो दीर्घो भवति । वच्छाओ वच्छत्तो ॥ 'संयोगे' (१·२·४०) इति दीर्घेऽपि ह्रस्वः, तथापि तद्ग्रहणं भ्यसि एत्वबाधनार्थम् ॥ ङसिनैव सिद्धे दोदुग्रहणमप्येत्वापवादायैव ॥ वच्छाउ वच्छाहिंतो वच्छाहि ॥ धणाओ धणत्तो धणाउ धणाहिंतो धणाहि ॥ गिरीओ गिरित्तो गिरीउ गिरीहिंतो गिरीहि ॥ गोरीओ गोरित्तो गोरीउ गोरीहि ॥ दहीओ दहित्तो दहीउ दहीहितो दहीहि ॥ बुद्धीओ बुद्धित्तो बुद्धीउ बुद्धीहिंतो बुद्धीहि ॥ गामणीओ गामणित्तो गामणीउ गामणीहिंतो गामणीहि ॥ तरूओ तरुत्तो तरूउ तरूहिंतो तरूहि ॥ महूओ महुत्तो महूउ महूहिंतो महूहि ॥ धेणूओ धेणुत्तो धेणूउ धेणूहिंतो धेणूहि ॥ वहूओ वहुत्तो वहूउ वहूहिंतो वहूहि ॥ ८ ॥

**सोर्लुक् ॥ ९ ॥**

नाम्नः परस्य सोः प्रथमैकवचनस्य लुग्भवति । हे देव । हे गङ्गे । हे गोरि । हे लच्छि । हे गामणि । हे वहु ॥ ९ ॥

**ङसोऽस्त्रियां सर् ॥ १० ॥**

ङसः षष्ठ्येकवचनस्य स इत्यादेशो भवति, अस्त्रिया स्त्रीलिङ्गे न भवति । रित्वाद् द्वित्वम् । वच्छस्स । धणस्स । गिरिस्स । दहिस्स । गामणिस्स । तरुस्स । महुस्स ॥ अस्त्रियामिति किम् । गङ्गाए । गोरीए । धेणूए । वहूए ॥ १० ॥

**ङेर्मिर् ॥ ११ ॥**

नाम्नः परस्य सप्तम्येकवचनस्यास्त्रिया मिर् इत्यादेशो भवति । रित्वाद् द्वित्वम् । वच्छम्मि । धणम्मि । गिरिम्मि । दहिम्मि । तरुम्मि । महुम्मि ॥ अस्त्रियामित्येव । मालाए । बुद्धीए । धेणूए । वहूए ॥ ११ ॥

---

9. KS हे गङ्गा for हे गङ्गे. S अहो लच्छि for हे लच्छि. 10. M रस्, S सल् for सर् in the Sūtra. Before ङसः in Com. KM read नाम्नः परस्य. M om. धणस्स गिरिस्स. MS om. गोरीए and वहूए. T om. from Sūtra. 11 down to the and fo Com. on Sūtra 22. 11. S ङेर्मिल् for the Sūtra. MS वणम्मि for धणम्मि. MS om. वहूए.

**अतो डो विसर्गः ॥ १२ ॥**

अकारान्तात्परो विसर्गः डिदोकारो भवति । सर्वतः सव्वओ । पुरतः पुरओ । अग्रतः अग्गओ ॥ एवं सिद्धावस्थापेक्षया । भवतः भवओ । भवन्तः भवन्तो । सन्तः सन्तो । कुतः कुओ ॥ १२ ॥

**सोः ॥ १३ ॥**

अत इत्यनुवर्तते । अतः परस्य सोः स्थाने डो भवति । वच्छो । देवो ॥ १३ ॥

**वैतत्तदः ॥ १४ ॥**

अदन्ताभ्यामेतत्तद्भ्या परस्य सोः डो वा भवति । एसो एस । सो स ॥ १४ ॥

**ङसेः श्लुक् ॥ १५ ॥**

वेत्यनुवर्तते । अतः परस्य ङसेः श्लुग्वा भवति । शित्त्वात्पूर्वस्य दीर्घः । वच्छा । धणा ॥ पक्षे । वच्छाहिंतो वच्छत्तो वच्छाओ वच्छाउ वच्छाहि ॥ १५ ॥

**ङेर्डे ॥ १६ ॥**

अतः परस्य सप्तम्येकवचनस्य डिदेत्वं वा भवति । वच्छे । धणे ॥ पक्षे । वच्छम्मि । धणम्मि ॥ १६ ॥

**ङसिसो हि ॥ १७ ॥**

अतः परस्य ङसिसः पञ्चम्या हि इति वा भवति । वच्छाहि । धणाहि ॥ भ्यासि एत्वे । वच्छेहि । धणेहि ॥ पक्षे हितोत्तोदोदु इत्येते च ॥ १७ ॥

**टो डेणल् ॥ १८ ॥**

अतः परस्य टावचनस्य डित् एण इत्यादेशो भवति । लित्वान्नित्यम् ॥ वच्छेण । धणेण ॥ अनुस्वारे । वच्छेणं । धणेणं ॥ १८ ॥

---

12. M अकारात्परो for अकारान्तात्परो. After अग्गओ M adds मार्गतः मग्गओ. 15. M om. वच्छाहि. 16. KMS ङिवचनस्य for सप्तम्येकवचनस्य. M डित्वं for डिदेत्वं. 18. KS लित्वान्न विकल्पः for लित्वान्नित्यम्.

**दिर्वा भ्यसि ॥ १९ ॥**

अत इति पञ्चम्यन्तस्य षष्ठ्यन्तविभक्तिविपरिणामः । अतो भ्यसादेशे सति दिः दीर्घो वा भवति । वच्छाहिंतो वच्छोहिंतो । वच्छासुंतो वच्छेसुंतो । वच्छाहि वच्छेहि ॥ त्तोदोदुषु दीर्घ एव ॥ १९ ॥

**शस्येत् ॥ २० ॥**

अतः शसि परे एद्वा भवति । वच्छे वच्छा पेच्छ ॥ २० ॥

**भिस्भ्यस्सुपि ॥ २१ ॥**

भिस् भ्यस् सुप् इत्येतेषु परेष्वत एत्वं भवति । पृथग्योगान्नित्यम् ॥ भिसि । वच्छेहिं ॥ भ्यसि । वच्छेहिंतो वच्छेसुंतो । वच्छेहि ॥ त्तोदोदुषु दीर्घ एव ॥ सुपि । वच्छेसु ॥ २१ ॥

**इदुतोर्दिः ॥ २२ ॥**

भिस्भ्यस्सुपि परे इदुतोः दिः दीर्घो भवति । भिसि । गिरीहिं गिरीहि ॥ एवं बुद्धीहिं । तरूहिं । धेणूहिं । महूहिं ॥ भ्यसि । गिरीहिंतो । गिरीसुंतो । गिरीओ । गिरीउ ॥ एवं बुद्धीओ । गामणीओ । तरूओ । महूओ आअअं ॥ सुपि । गिरीसु । दहीसु । गामणीसु । तरूसु ठिअं ॥ क्वचिन्न भवति । दिअभूमिसु दाणजलद्दिआइं, द्विजभूमिषु दानजलार्द्रितानि ॥ इदुतोरिति किम् । वच्छेहि । वच्छेसुंतो । वच्छेसु ॥ २२ ॥

**चतुरो वा ॥ २३ ॥**

चतुःशब्दस्य उदन्तस्य भिस्भ्यस्सुपि परे दीर्घो वा भवति । चउहि चऊहि । चउहिंतो चऊहिंतो । चउसु चऊसु ॥ २३ ॥

---

19. KS भ्यस्यादेशे परे for भ्यसादेशे सति. 20. MS om. पेच्छ. 21. योगविभागान्नित्य for पृथग्योगान्नित्यम्. K पक्षे दीर्घोपि; M पक्षे दीर्घः for त्तोदोदुषु दीर्घ एव. 22. KS °सुपि च परे for °सुपि परे. M इत्येतेषु परेषु for परे. After बुद्धीओ KS add दहीओ. After गिरीसु KS add बुद्धीसु. K दाणजलोल्लिआइं; S दोण° for दाणजलद्दिआइं.

**पुंसो जसो डउडओ ॥ २४ ॥**

इदुत इत्यस्य पञ्चम्यन्तपरिणामः । पुंलिङ्गादिदुतः परस्य जसः अउ अओ इत्येतौ डितौ वा भवतः । अग्गउ अग्गओ । वाअउ वाअओ ॥ पक्षे । अग्गी अग्गिणो । वाऊ वाउणो ॥ पुंसीति किम् । बुद्धीइ । दहीइ ॥ इदुत इत्येव । वच्छा ॥ २४ ॥

**डवो उतः ॥ २५ ॥**

पुंस इति वर्तते, जस इति च । पुंलिङ्गादुतः परस्य जसः डित् अवो इति वा भवति । वाअवो ॥ पक्षे । वाअओ वाऊ वाउणो ॥ उत इति किम् । वच्छा ॥ पुंस इति किम् । धेणूउ । वहूउ ॥ २५ ॥

**णो शसश्च ॥ २६ ॥**

योगविभागादिदुतौ गृह्येते । इदुत परस्य जसः शसश्च णो इत्यादेशो भवति । गिरिणो तरुणो चिट्ठन्ति पेच्छ वा ॥ पक्षे । गिरी । तरू ॥ पुंस इत्येव । बुद्धी । धेणू । दहीइं । महूइं ॥ २६ ॥

**नृनपि ङसिङसोः ॥ २७ ॥**

पुंलिङ्गे नपुंसकलिङ्गे च वर्तमानादिदुतः परयोर्ङसिङसोर्णो इत्यादेशो वा भवति । गिरिणो तरुणो आगओ विआरो वा ॥ पक्षे ङसि–गिरीओ । तरूओ । दहीओ । महूओ ॥ ङस्–गिरिस्स । तरुस्स । दहिस्स । महुस्स ॥ नृनपीति किम् । बुद्धीए । धेणूए ॥ ङसिङ्सोरिति किम् । रिद्धो । समिद्धी । दिट्ठं ॥ इदुत इत्येव । कमले । कमलस्स ॥ २७ ॥

**टो णा ॥ २८ ॥**

पुंनपुंसके वर्तमानादिदुतः परस्य टावचनस्य णा भवति । गिरिणा । दहिणा । गामणिणा । तरुणा । महुणा । खलपुणा ॥ नृनपीत्येव । बुद्धीए । धेणूए ॥ इदुत इत्येव । कमलेण ॥ २८ ॥

---

24. K इत उतः for इदुतः. K om. वाअउ वाअओ. KS बुद्धीओ धेणूओ for बुद्धीइ धेणूइ. M om. इदुत इत्येव । वच्छा. 25 M om. the Sūtra and Com. T पुंस इति किं । धेणू । महूइं for धेणूउ वहूउ. 26. T इतौ for इदुतौ. KMS परिगृह्येते for गृह्येते. 27. KMS बुद्धीअ धेणूअ for बुद्धीए धेणूए. 28 M om the Sūtra and Com T om. the Sūtra. T पुंलिङ्गे नपुंसकलिङ्गे वा for पुंनपुंसके. T उतः for इदुतः.

**श्नुगनपि सोः ॥ २९ ॥**

इदुतः परस्य सोः शानुबन्धो लुग्भवति । अनपि नपुंसकलिङ्गे न भवति । गिरी । बुद्धी । तरू । धेणू ॥ अनपीति किम् । दहिं । महु ॥२९॥

**मङ्लुगसंबुद्धेर्नपः ॥ ३० ॥**

इदुत इति निवृत्तम् । नपो नपुंसकलिङ्गात्परस्य सोर्मकारो ङानुबन्धो लुक् च भवति, असंबुद्धेः आमन्त्रणार्थस्य न भवति । वणं । दहिं । महुं ॥ दहि महु इति तु सिद्धावस्थापेक्षया ॥ बहुलाधिकारादकारान्तान्न लुक् ॥३०॥

**श्निंशिङ् जश्शसोः ॥ ३१ ॥**

नप इत्यनुवर्तते । नपुंसकात्परौ जस् शस् इत्येतौ श्नि शिं शिङ् इति त्रीनादेशानापद्येते शानुबन्धान् । शकारो दीर्घार्थः । ङकारः सानुनासिकोच्चारणार्थः । वणाणि वणाइं वणाइँ । गुणाणि गुणाइं गुणाइँ चिट्ठन्ति पेच्छ वा ॥ एवं दहिमहुबिन्द्वादि ॥ नप इत्येव । वच्छा ॥ ३१ ॥

**शोशु स्त्रियां तु ॥ ३२ ॥**

जश्शसाविति वर्तते । स्त्रिया वर्तमानान्नाम्नः परौ जश्शसौ ओत्वमुत्वं च शितावापद्येते तु । मालाओ मालाउ । बुद्धीओ बुद्धीउ ॥ एवं सहीधेणुवहू-प्रभृतयः ॥ पक्षे । माला । बुद्धी । सही । धेणू । वहू ॥ स्त्रियामिति किम् । वच्छा ॥ जश्शसाविति किम् । मालाए कअं ॥ ३२ ॥

**आदीतः सोश्च ॥ ३३ ॥**

स्त्रियामित्यनुवर्तते । स्त्रियामीकारान्तान्नाम्नः परस्य सोश्चकाराज्जश्शसोश्च आत्वं तु भवति । एसा हसन्तीआ ॥ जस् शस् । गोरीआ रोहन्ति पेच्छ वा ॥ पक्षे । हसन्तीओ । गोरीओ ॥ ३३ ॥

---

29. K नपुंसके for नपुसकलिङ्गे. 30. After वण K adds दहिं दहि मुहुं मुहु. S तणं for वणं. 31. KMS त्रीनादेशान्शानुबंधानापद्यते for त्रीनादेशानापद्यते शानुबन्धान्. 32. MS जस् शस् इति वर्तते for जश्शसाविति वर्तते. M om. तु in Com. MS जश्शसीति किं for जश्शसाविति किम् 33. KM गोरिआ रेहंति (चिट्ठंति) for गोरीआ रोहन्ति. T रोभन्ति for रोहन्ति.

**ङसेः शशाशिशे ॥ ३४ ॥**

स्त्रियां वर्तमानान्नाम्नः परस्य ङसेः अ आ इ ए इति चत्वार आदेशाः शितो भवन्ति तु । मालाअ मालाइ मालाए । गोरीअ गोरीआ गोरीइ गोरीए । एवं धेणू । वहू ॥ पक्षे । मालाहिंतो । मालत्तो । मालाओ । मालाउ ॥ एवं बुद्धीहिंतो इत्यादि ॥ ३४ ॥

**टाङिङसाम् ॥ ३५ ॥**

शशाशिशे इत्यनुवर्तते । स्त्रियां नाम्नः परेषां टा ङि ङस् इत्येतेषां स्थाने अ आ इ ए इत्येते आदेशाः शितो भवन्ति । योगविभागान्नित्यम् । जाआअ जाआइ जाआए कअं ठिअं मुहं वा ॥ कप्रत्यये । जाइआअ जाइआइ जाइआए । बुद्धिआअ बुद्धिआआ बुद्धिआइ बुद्धिआए ॥ कप्रत्ययाभावे । बुद्धीअ बुद्धीआ बुद्धीइ बुद्धीए कअं ठिअं वअणं वा ॥ स्त्रियामिति किम् । वच्छेण । वच्छम्मि । वच्छस्स ॥ ३५ ॥

**नातः शा ॥ ३६ ॥**

स्त्रियां वर्तमानाना नाम्नः परेषां टा ङि ङस् इत्येतेषा प्राप्तः शा इति शित् आकारः आकारान्तान्न भवति । मालाअ मालाइ मालाए कअं ठिअं मुहं वा ॥३६॥

**पुंसोऽजातेर्ङीर्वा ॥ ३७ ॥**

अजातिवाचिनः पुंलिङ्गात् स्त्रियां वर्तमानात् ङीप्प्रत्ययो वा भवति । नीली नीला । काली काला । हसमाणी हसमाणा । सुप्पणही सुप्पणहा । इमीए इमाए । इमीणं इमाणं । एईए एआए । एईणं एआणं ॥ अजातेरिति किम् । अआअ अआइ अआए ॥ अप्राप्ते विभाषाविधिरयम् । तेन गौरी कुमारी इत्यादौ संस्कृतवदेव नित्यम् ॥ ३७ ॥

---

34. T सालाअ etc. for मालाअ. All Mss. add मालाआ (T साळाआ) after मालाअ against the Sūtra नातः शा below. 35. After जाआअ all Mss. add जाआआ; After जाइआअ all Mss add जाइआआ against 2 2.36 below. K वअण व for वअणं वा. After वअणं वा M adds एवं वहूअ इत्यादि.M स्त्रियामित्येव for स्त्रियामिति किम्.36. KMS सुहं वा for मुहं वा. 37. B सहमाणी सहमाणा; T भसमाणा भसमाणा for हसमाणी हसमाणा.BKM अआआ for अआअ. T अआ अजा । एलआ एलक्षा for अआअ ...अआए. K अप्राप्ते विधिरयं for अप्राप्ते विभाषाविधिरयम्.

**ङीप्प्रत्यये ॥ ३८ ॥**

वेत्यनुवर्तते । 'टिड्ढाणञ्' [पा० ४·१·१५] इत्यादिसूत्रेण प्रत्ययनिमित्तो यो ङीप्प्रत्ययो विहितः स स्त्रिया वर्तमानान्नाम्नो वा भवति । साहणी साधनी । कुरुअरी ॥ पक्षे विकल्पसामर्थ्यादेव टाप् । साहणा । कुरुअरा ॥ ३८ ॥

**हरिद्राच्छाये ॥ ३९ ॥**

अनयोः ङीप् वा भवति । हलद्दी हलद्दा । छाही छाहा ॥ ३९ ॥

**किंयत्तदोऽस्वमामि सुपि ॥ ४० ॥**

सु-अम्-आम् वर्जिते सुपि परे किंयत्तद्भ्यः स्त्रियां ङीप् वा भवति । कीओ काओ । कीए काए । कीसु कासु ॥ जीओ जाओ । जीए जाए । जीसु जासु ॥ तीओ ताओ । तीए ताए । तीसु तासु ॥ अस्वमामीति किम् । का । जा । सा ॥ कं । जं । तं ॥ काणं । जाणं । ताणं ॥४०॥

**स्वस्रादेर्डा ॥ ४१ ॥**

स्वस्रादेः स्त्रिया वर्तमानात् आप्रत्ययो डिद्भवति । लित्वान्नित्यम् । ससा । णणन्दा । दुहिआ । दुहिआहि । दुहिआसु ॥ ४१ ॥

**डोश्लुकौ तु संबुद्धेः ॥ ४२ ॥**

'सोः' [२·२·१३] इति यः प्राप्तो डो, यश्च 'श्लुगनपि सोः' [२·२·२९] इति श्लुग् विहितः, तौ संबुद्धेरामन्त्रणार्थस्य सोः तु भवतः । हे देव, हे देवो ॥ हे अज्ज, हे अज्जो ॥ श्लुक् । हे हरि, हे हरी । हे गुरु, हे गुरू । हे बुद्धि, हे बुद्धी । हे वहु, वहू ॥ जाइविसुद्धेण पहू, जातिविशुद्धेन प्रभो ॥ संबुद्धेरिति किम् । दे कासवा । दे गोअरा । रे रे पिलिआ । रे रे णिग्घणिआ ॥ ४२ ॥

---

38. Bp om. ङीप् in the Sūtra; T सी for ङीप् in the Sūtra. ST अणादिसूत्रेण for टिड्ढाणञ् इत्यादिसूत्रेण. B सहमाणी for साहणी. K कुलरी for कुरुअरी. KMST कुरुचरा for कुरुअरा. 39. KS हरिद्राच्छाया for the Sūtra. KS ङि for ङीप्. 42. KS हे कासवा, हे गोअमा, रे रे पिप्पला; T हे गे अम्मा, रे रे पव्वळआ, रे रे णिग्घणिआ for दे ...ग्घणिआ.

**ऋदन्ताड्ङः ॥ ४३ ॥**

संबुद्धेरित्यनुवर्तते। ऋदन्तान्नाम्नः परस्य संबुद्धेः ङित् अत्वं तु भवति। हे पितः हे पिअ। हे दातः हे दाअ ॥ ४३ ॥

**नाम्नि डरम् ॥ ४४ ॥**

नाम्नि संज्ञाया ऋदन्तात्परस्य संबुद्धेर्डित् अरं इति तु भवति। हे पितः हे पिअरं। पक्षे हे पिअ ॥ नाम्नीति किम्। हे कत्तार ॥ ४४ ॥

**टापो डे ॥ ४५ ॥**

टाबन्तात्परस्य संबुद्धेर्डित् एत्वं तु भवति। हे माले। हे अज्जे ॥ पक्षे। हे माला। हे अज्जू इत्यादि ॥ टाप इति किम्। हे पिउच्छा। हे माउच्छा ॥ बहुलाधिकारात्कचिदोत्वमपि। अम्मो भणामि भणिए ॥ ४५ ॥

**ह्रस्वलीदूतः ॥ ४६ ॥**

संबुद्धिनिमित्तयोरीदूतोर्ह्रस्वो लिद्भवति। हे णइ। हे लच्छि। हे वहु ॥ ४६ ॥

**क्विपः ॥ ४७ ॥**

संबुद्धेरिति निवृत्तम्। क्विबन्तयोरीदूतोर्ह्रस्वो भवति। गामणिणा। खलपुणा। गामणिसुंतो। खलपुहिं ॥ ४७ ॥

---

43. M om. the Sūtra and Com. KS हे पिअ हे पिअरं हे मात. हे माअ हे माअरं for हे पिअ. 44. M om. the Sūtra and Com. K हे पिअर हे पिअ for हे पिअरं. T पिदरं for पिअरं. 45. M om. the Sūtra and Com. After हे अज्जे K adds हे पुत्तिए. K हे मालि for हे माला. S om. हे अज्जू. T कचिदेत्वमपि। अत्ते भणामि भणिए for कचिदोत्वमपि अम्मो भणामि भणिए. 46. M om. the Sūtra and Com. 47, K क्विबः for the Sūtra. K खलपुण. KT गामणिसुओ for गामणिसुंतो. K खलपुमुहं; T खळपुअहं for खलपुहिं.

**उद्दतां त्वस्वमामि ॥ ४८ ॥**

ऋदन्तानामुत्वं भवति तु, अस्वमामि सु-अम्-आम्-वर्जिते, अर्थात्सुपि परे ॥ जसि । भत्तू भत्तुणो भत्तओ भत्तउ । पक्षे भत्तारा ॥ शसि । भत्तू भत्तुणो । पक्षे भत्तारा ॥ टा । भत्तुणा भत्तारेण ॥ भिस् । भत्तूहिं । पक्षे भत्तारेहिं ॥ ङसि । भत्तूहिंतो भत्तुत्तो भत्तूओ भत्तूउ भत्तुणो । पक्षे भत्ताराहिंतो भत्तारत्तो भत्ताराउ भत्तारा भत्ताराहि ॥ ङस् । भत्तुणो भत्तुस्स ॥ पक्षे भत्तारस्स ॥ ङौ । भत्तुम्मि । पक्षे भत्तारे ॥ सुप् । भत्तूसु । पक्षे भत्तारेसु ॥ बहुवचनं व्याप्त्यर्थम्, तेन यथादर्शनं नाम्नि उत्वं वा भवति ॥ जश्शस्-ङसिङस्सु । पिउणो । जामाउणो ॥ टा । भाउणा ॥ भिस् । पिऊहिं ॥ सुप् । पिऊसु ॥ पक्षे पिआर इत्यादि ॥ अस्वमामीति किम् । सु । पिआ ॥ अम् । पिअरं ॥ आम् । पिअराणं ॥ ४८ ॥

**आरः सुपि ॥ ४९ ॥**

ऋदन्तस्य सुपि परे आर इत्यादेशो वा भवति । भत्तारो । भत्तारा । भत्तारं । भत्तारे । भत्तारेणं । भत्तारेहि ॥ एवमन्यत्राप्युदाहार्यम् ॥ लुप्तविभक्त्यपेक्षया भत्तारविहिअं ॥ ४९ ॥

**मातुरा अरा ॥ ५० ॥**

मातृशब्दस्य आ अरा इत्यादेशौ भवतः । माआ माअरा । माआओ माअराओ । माआइ माअराइ । माअं माअरं ॥ बहुलाधिकाराज्जनन्यर्थस्य आ, देवतार्थस्य अरा । माआए कुच्छिआए । णमो माअराणं ॥ 'इदुन्मातुः' [१·२·८२] इत्युत्वे माउणि । 'उद्दता त्वस्वमामि' [२·२·४८] इत्युत्वे तु माऊण माऊए ॥ सभत्तिअं वन्दे ॥ सुपीत्येव । माइदेवो । माइगणो ॥५०॥

---

48. KST om. ङौ भत्तुम्मि। पक्षे भत्तारे. 50. After मातृशब्दस्य KS add ऋतः सुपि परे. K om. माआइ माअराइ. K माईण for माऊण. B समेत्तिअं, T समत्तअं for सभत्तिअं.

**संज्ञायामरः ॥ ५१ ॥**

ऋदन्तस्य संज्ञाया सुपि परे अर इत्यादेशो भवति। पिअरा पिअरो। पिअरं पिअरे। पिअरेण पिअरेहिं॥ जामाअरो जामाअरा। जामाअरं जामाअरे। जामाअरेण जामाअरेहिं ॥ ५१ ॥

**आ सौ वा ॥ ५२ ॥**

ऋदन्तस्य सौ परे आत्वं वा भवति। पिआ। माआ। जामाआ। भाआ। भत्ता। कत्ता॥ पक्षे। पिअरो। माअरो। जामाअरो। भाअरो। भत्तारो। कत्तारो ॥ ५२ ॥

**राज्ञः ॥ ५३ ॥**

वेत्यनुवर्तते। राजन्शब्दस्य नलोपे सति अन्त्यस्य सौ परे आत्वं वा भवति। राआ। हे राआ ॥ पक्षे आणादेशे। राआणो। हे राआणो ॥ हे राअं इति शौरसेन्याम् ॥ ५३ ॥

**टो णा ॥ ५४ ॥**

राज्ञ इत्यनुवर्तते। राजन्शब्दात्परस्य टावचनस्य णा इत्यादेशो वा भवति। राइणा रण्णा॥ पक्षे राएण कअं॥ ५४ ॥

**जश्शस्ङसिङसां णोश् ॥ ५५ ॥**

राज्ञः परेषा जस् जस् ङसि ङस् इत्येतेशा णो इत्यादेशः शिद्भवति वा। जस्—राआणो चिट्ठन्ति। पक्षे राआ॥ शस्—राआणो पेच्छ। पक्षे राआ॥ ङसि—राइणो रण्णो आअओ। पक्षे राआहिंतो राअत्तो राआओ राउआ राआ राआहिं॥ ङस्—राइणो रण्णो धणं। पक्षे राअस्स ॥ ५५ ॥

---

51. M संज्ञायां रः for the Sūtra. 52. M सौ वा for the Sūtra. KM om. भत्तारो. 53. K om. वेत्यनुवर्तते. S om. सति. KMT om. हे राआणो. 54. °शब्दात्परस्य for °शब्दस्य. K राआणो for राइणा. M om. पक्षे. 55. T राइत्तो for राअत्तो. BM रार्णो, S राआणो for राइणो

**णोणाङ्ग्विदना जः ॥ ५६ ॥**

राजन्शब्दसंबन्धिनो जकारस्य अना सहितस्य णो णा इत्यादेशयोः ङ्विचने च परे इकारो वा भवति। राइणो चिट्ठन्ति पेच्छ आअओ धणं वा। राइणा कअं। राइम्मि ठिअं॥ पक्षे। राआणो। रण्णा। राएण। राअम्मि॥ ॥ ५६ ॥

**इणममामा ॥ ५७ ॥**

अना ज इत्यनुवर्तते। राजन्शब्दसंबन्धिनो जकारस्य अना सहितस्य अम् आम् इत्येताभ्या सह इणं इत्यादेशो वा भवति। राइणं पेच्छ धणं वा। पक्षे। राअं। राआणं॥ ५७ ॥

**भिस्भ्यसाम्सुप्स्वीत् ॥ ५८ ॥**

राजन्शब्दस्य अना सहितस्य जस्य भिस् भ्यस् आम् सुप् इत्येतेषु परेषु ईकारो वा भवति। भिस्—राईहिं॥ भ्यस्—राईहिंतो। राईसुंतो। राईहि॥ आम्—राईणं॥ सुप्—राईसु॥ पक्षे। राएहिं इत्यादि॥ ५८ ॥

**ङस्ङसिटां णोणोर्डण् ॥ ५९ ॥**

राजन्शब्दस्य अना सहितस्य जस्य ङस्ङसिटावचनाना यौ णो णा इत्यादेशौ तयोः परयोः डित् अण् इत्यादेशो वा भवति। रण्णो राइणो धणं आअओ वा। रण्गा राइणा कअं॥ ङसूङसिटामिति किम्। राआणो चिट्ठन्ति पेच्छ वा॥ णोणोरिति किम्। राअस्स। राअओ। राएण॥ ५९ ॥

---

56. T णो णा इत्यादिषु डिद्वचनपरे for णो णा इत्यादेशयोः ङ्विचने च परे. T om. धणं. 58. M जस्यना सहितस्य for अना सहितस्य जस्य. T राआहिं for राएहिं. 59. T om. जस्य. KMT कअ for धण.

**पुंस्याणो राजवच्चानः ॥ ६० ॥**

पुंलिङ्गे वर्तमानस्य अन् इत्यस्य स्थाने आण इत्यादेशो वा भवति । पक्षे यथादर्शनं राजवत्कार्यं च भवति । आणादेशे च 'सोः' [ २·२·१३ ] इत्यादयः प्रवर्तन्ते । पक्षे तु राजवत् 'टो णा' [२·२·५४], 'जश्शस्ङसि-ङ्सा णोश्' [ २·२·५५ ], 'इणममामा' [ २·२·५७ ] इति प्रवर्तन्ते । अप्पाणो अप्पाणा । अप्पाणं अप्पाणे । अप्पाणेण अप्पाणेहिं । अप्पाणाओ अप्पाणासुंतो । अप्पाणस्स अप्पाणाणं । अप्पाणम्मि अप्पाणेसु ॥ पक्षे राजवत् । अप्पा अप्पो । दे अप्पा दे अप्पो । अप्पाणो चिट्ठन्ति पेच्छ वा । अप्पणा अप्पेहिं । अप्पाहिंतो अप्पत्तो अप्पाओ अप्पाउ अप्पा अप्पाहि अप्पा-सुंतो आअओ । अप्पाणो अप्पाणं । अप्पम्मि अप्पेसु ॥ राआणो राआणा । राआणं राआणे । राआणेण राआणाहिं । राआणासुंतो राआणाहिंतो । राआ-णस्स राआणाणं । राआणम्मि राआणेसु ॥ पक्षे राआ इत्यादि ॥ एवं युवन्-जुवाणो जुवाणा जुवा ॥ ब्रह्मन्—बम्हाणो बम्हा ॥ अध्वन्—अद्धाणो अद्धा ॥ उक्षन्—उच्छाणो उच्छा ॥ ग्रावन्—गावाणो गावा ॥ पूषन्—पूसाणो पूसा ॥ तक्षन्—तक्खाणो तक्खा ॥ मूर्धन्—मुद्धाणो मुद्धा ॥ श्वन्—साणो सा । सुकर्मन्-सुकम्माणो सुकम्मा । पेच्छइ स कहं सुकम्माणो, पश्यति स कथं सुकर्मा ॥ पुंसीति किम् । शर्मन्—सम्मं ॥ ६० ॥

**टो वात्मनो णिआ णइआ ॥ ६१ ॥**

आत्मनः परस्य टावचनस्य णिआ णइआ इत्यादेशौ वा भवतः । पुनर्वाग्रहणादुत्तरत्र न विकल्पः ॥ अप्पणिआ अप्पणइआ ॥ पक्षे अप्पाणेण अप्पेण ॥ ६१ ॥

---

60. KST om. युवन्. BM बंह्राणो बंह्रा for बम्हाणो बम्हा. T om. बम्हाणो बम्हा. 61. T परस्यैव for परस्य.

**सर्वादेर्जसोऽतो डे ॥ ६२ ॥**

सर्वादेरदन्तात्परस्य जस एत्वं डिद्भवति । सव्वे । अण्णे । जे । ते । के । इअरे । अवरे । एए ॥ अत इति किम् । सव्वाओ ॥ ६२ ॥

**ङेस्त्थस्सिम्मि ॥ ६३ ॥**

सर्वादेरित्यनुवर्तते, अत इति च । सर्वादेरदन्तात्परस्य ङेः स्थाने त्थ स्सि म्मि इति त्रय आदेशा भवन्ति । सव्वत्थ सव्वस्सि सव्वम्मि । अण्णत्थ अण्णस्सि अण्णम्मि ॥ एवं सर्वत्र ॥ अत इत्येव । अमुम्मि ॥ ६३ ॥

**अनिदमेतदस्तु क्रियत्तदः स्त्रियां च हिं ॥ ६४ ॥**

इदमेतद्वर्जितात्सर्वादेः परस्य ङेः हिं इत्यादेशो भवति तु । किं-यत्तद्भ्यः स्त्रियामपि । सव्वहिं । अण्णहिं । जहिं । तहिं । कहिं ॥ पक्षे सव्वत्थ सव्वस्सि सव्वम्मि इत्यादि ॥ स्त्रिया किम् । कियत्तदः—काहिं । जाहिं । ताहिं ॥ बाहुल्कादेव 'कियत्तदोऽस्वमामि सुपि' [२·२·४०] इति ङीप् वा भवति । काए कीए इत्यादि ॥ अनिदमेतद इति किम् । इमस्सि । अस्सि ॥ ६४ ॥

**आमां डेसिं ॥ ६५ ॥**

त्वित्यनुवर्तते । सर्वादेः परस्यामः डित् एसिं इत्यादेशो भवति तु । सव्वेसिं । अण्णेसि । एसि । इमेसिं । एएसिं । जेसिं । तेसिं । केसिं ॥ पक्षे । सव्वाणं । अण्णाणं । इत्यादि ॥ आमामिति बहुवचनात्स्त्रीविषयस्यापि ॥ सर्वासाम् सव्वेसिं ॥ एवं अण्णेसिं । जेसिं । तेसिं ॥ ६५ ॥

**कितद्भ्यां सश् ॥ ६६ ॥**

कितद्भ्या परस्यामः शित् सकारो वा भवति । कास । तास ॥ पक्षे । केसिं । तेसिं ॥ ६६ ॥

---

62. T ले for डे. T एत्वं लिद्भवति for एत्वं डिद्भवति. 63. T वर्तते for अनुवर्तते. 64 After कीए M adds जाए जीए ताए तीए. 65. KM सर्वादेरतः परस्य; T सर्वादेः परेषां for सर्वादेः परस्य. 66. MS शस् for सश्.

**कियत्तद्भ्यो ङस् ॥ ६७ ॥**

सश् इत्यनुवर्तते । कियतद्भ्यः परो यो ङस् तस्य सश् इत्यादेशो वा भवति । कास । जास । तास ॥ पक्षे । कस्स । जस्स । तस्स ॥ बहुलाधिकारात् कियत्तद्भ्यः स्त्रियामपि । कस्याः कास । यस्याः जास । तस्याः तास ॥ पक्षे । काए । जाए । ताए ॥६७॥

**ईतः सेसार् ॥ ६८ ॥**

ङस् इति वर्तते । ईकारान्तेभ्यः कियत्तद्भ्यः परस्य ङसः से सार् इति वा भवतः । सार् इत्यस्य रित्वाद् द्वित्वम् । कीसे । किस्सा ॥ पक्षे । कीअ । कीआ । कीइ । कीए ॥ जीसे । जिस्सा । जीअ । जीआ । जीइ । जीए ॥ तीसे । तिस्सा । तीअ । तीआ । तीइ । तीए ॥ ६८ ॥

**ङिरिआ डाहे डाला काले ॥ ६९ ॥**

कालेऽभिधेये कियतद्भ्यः परो ङिः इआ इत्यादेशं आहे आला इत्येतौ च ङितावापद्यते वा । कइआ काहे काला ॥ जइआ जाहे जाला ॥ तइआ ताहे ताला ॥ ताला जाअन्ति गुणा जाला ते सहिअएहि घेप्पन्ति ( विषमबाणलीला ), तदा जायन्ते गुणाः यदा ते सहृदयैर्गृह्यन्ते ॥ पक्षे । कहिं कत्थ कस्सिं कम्मि इत्यादि ॥ ६९ ॥

**म्हा ङसेः ॥ ७० ॥**

कियत्तद्भ्यः परस्य ङसेः म्हा इत्यादेशो भवति तु । कम्हा । जम्हा । तम्हा ॥ पक्षे । काओ । जाओ । ताओ ॥ ७० ॥

**किमो डीस डिणो ॥ ७१ ॥**

किमः परस्य ङसेः ईस इणो इत्यादेशौ डितौ भवतः । कीस किणो ॥ पक्षे । कम्हा । काओ ॥ ७१ ॥

**डो तदस्तु ॥ ७२ ॥**

तदः परस्य ङसेः डिदोत्वं तु भवति । तो । तम्हा ॥ ७२ ॥

---

67 After तास KM add धणं. 68. M ईकः सेसार्; S ईशः से सात्; T ईतः से सा for the Sūtra KM परो for परस्य. 72. MT डो तदः for the Sūtra.

**इदमेतत्किंयत्तद्भ्यष्टो डिणा ॥ ७३ ॥**

एभ्यः सर्वादिभ्योऽदन्तेभ्यः परस्य टावचनस्य इणा इति डित् भवति तु । इमिणा इमेण । एदिणा एदेण । किणा केण । जिणा जेण । तिणा तेण ॥ ७३ ॥

**क्वचित्सुपि तदो णः ॥ ७४ ॥**

सुपि परे तच्छब्दे णो भवति तु, क्वचिल्लक्ष्यानुसारेण । णं पेच्छ, तं पश्य ॥ स्त्रियामपि । हत्थुग्गामिअमुही भणइ णं तिअडा, हस्तोन्नामितमुखी भणति तां त्रिजटा ॥ णेण भणिअं, तेन भणितम् ॥ णीए तया ॥ णेहिं कअं, तैः कृतम् । णाहि कअं, ताभिः कृतम् ॥ ७४ ॥

**त्रतसि च किमो ल्कः ॥ ७५ ॥**

सुपीत्यनुवर्तते । किंशब्दस्य त्रतसोः सुपि च परे लित् को भवति । को के । कं के । केण केहिं ॥ त्र—कत्थ कस्सिं ॥ तस्—कत्तो कदो ॥ ७५ ॥

**इदम इमः ॥ ७६ ॥**

इदमः सुपि परे इम इत्यादेशो भवति । इमो इमे । इमं इमे । इमेण इमेहिं ॥ स्त्रियामपि । इमा ॥ ७६ ॥

**पुंसि सुना त्वयं स्त्रियामिमिआ ॥ ७७ ॥**

इदमः सुना सहितस्य पुंलिङ्गे अयमिति स्त्रिया इमिआ इति तु भवति । अयं कअकज्जो । इमिआ सण्णिअमाआ ॥ पक्षे । इमो । इमा ॥ ७७ ॥

**अत्सुस्सिंहिस्से ॥ ७८ ॥**

इदमः सुप् ङि भिस् ङस् इत्येतेषु सु स्सिं हि स्स इत्यादेशेष्वापन्नेषु अत्वं तु भवति । एसु । अस्सिं । एहि । अस्स ॥ पक्षे । इमेसु । इमस्सिं । इमेहिं । इमाहिं । इमस्स ॥ ७८ ॥

---

74. B हत्था णमिअमुही for हत्थुग्गामिअमुही. After तेन भणितम् T adds भणिअं च णाए. 77. KM स्त्रीलिङ्गे for स्त्रियां.

**टाससि णः ॥ ७९ ॥**

टास् इति तृतीयाविभक्तिः, अस् इति द्वितीयाविभक्तिः, तयोः परयोरिदमः स्थाने ण इत्यादेशो भवति तु । णेण णेहि कअं । णं णे पेच्छ ॥ पक्षे । इमेण इमेहिं । इमं इमे ॥ ७९ ॥

**इहेणं ङ्यमः ॥ ८० ॥**

ङि अम् इत्याभ्या सहितस्य इदमः स्थाने इह इणं इत्येतौ क्रमेण तु भवतः । ङि–इह । अम्–इणं ॥ पक्षे । इमस्सिं । इमम्मि । इमं ॥ ८० ॥

**न त्थः ॥ ८१ ॥**

इदमः परस्य ङिवचनस्य 'ङेस्त्थस्सिंसम्मि' [२·२·६३] इति प्राप्तः त्थो न भवति । इह । इमस्सिं । इमम्मि ॥ ८१ ॥

**क्लीबे स्वमेदमिणमिणमो ॥ ८२ ॥**

नपुंसके वर्तमानस्य इदमः सु अम् इत्याभ्यां सहितस्य इदं इणं इणमो इति त्रय आदेशा भवन्ति । इदं इणं इणमो चिट्ठइ पेच्छ वा ॥ ८२ ॥

**किं किं ॥ ८३ ॥**

क्लीबे, स्वमेति च वर्तते । क्लीबे वर्तमानः किंशब्दः स्वमा सहितः किं इत्येव भवति । किं कुलं । किं भणसि ॥ ८३ ॥

**तदिदमेतदां सेसिं तु ङसामा ॥ ८४ ॥**

तद् इदम् एतद् इत्येतेषां स्थाने ङस् आम् इत्याभ्या सह यथासंख्यं से सिं इत्यादेशौ तु भवतः । तद्–से गुणा, तस्य गुणाः तस्या वा ॥ सिं उच्छाहो, तेषामुत्साहः, तासा वा ॥ इदम्–से सीलं, अस्य शीलम्, अस्या वा ॥ सिं गुणा, एषा गुणाः, आसा वा ॥ एतद्–से हिअअं, एतस्य हृदयम्, एतस्या वा ॥ सिं गुणा, एतेषा गुणाः, एतासा वा ॥ पक्षे । तस्स । तेसिं । ताण ॥ इमस्स । इमस्सिं । इमाण ॥ एअस्स । एअस्सिं । एआण ॥ तदेतदोरमा सह से सिं इति आदेशं केचिदिच्छन्ति ॥ ८४ ॥

---

82. KMS नपुंसकलिङ्ग for नपुंसके. T om. चिट्ठइ पेच्छ वा. 83. KMT किमेव भवति for किं इत्येव भवति. KT किं भणासि for किं भणसि. 84. B इत्येषां for इत्येतेषां. KM कश्चिदिच्छति for केचिदिच्छन्ति.

**एत्तो एत्ताहे ङसिनतदः ॥ ८५ ॥**

त्वित्यनुवर्तते। एतदो ङसिना सह एत्तो एत्ताहे इत्यादेशौ तु भवतः। एत्तो एत्ताहे आगओ ॥ पक्षे। एआहिंतो एअत्तो एआओ एआहि एआउ एआ ॥ ८५ ॥

**त्थे डेत् ॥ ८६ ॥**

एतदः स्थाने त्रानुबन्धे थकारे परे डानुबन्धो लानुबन्धश्च एत् भवति। एत्थ ॥ ८६ ॥

**एतदो म्मावदितौ वा ॥ ८७ ॥**

सप्तम्येकवचनादेशे म्मौ परे एतद एकारस्य अ इ इत्यादेशौ वा भवतः। अअम्मि इअम्मि ॥ पक्षे। एअम्मि ॥ ८७ ॥

**सुनैस इणमो इणं ॥ ८८ ॥**

एतदः सुना सह एस इणमो इणं इत्यादेशा वा भवन्ति। एस सहाओ च्चिअ ससहरस्स, एष स्वभाव एव शशधरस्य ॥ एस गई, एषा गतिः। सव्वस्स वि एस गई, सर्वस्याप्येषा गतिः ॥ एस सरं, एतत्सरः ॥ इणमो। इणं ॥ पक्षे। एसा। एओ। एअं ॥ ८८ ॥

**तस्सौ सोऽक्लीबे तदश्च ॥ ८९ ॥**

तदश्चकारादेतदश्च तकारस्य सौ परे सकारो भवति, अक्लीबे अनपुंसके। सो पुरिसो। सा महिला ॥ एसो पिओ। एसा पिआ। एसा मुद्धा ॥ सौ इत्येव। ते, एए चिट्ठन्ति। ताओ, एआओ महिलाओ ॥ अक्लीब इति किम्। तं, एअं वणं ॥ ८९ ॥

---

88. T सरभस्स for ससहरस्स. KMT om. एस गई एषा गतिः; T om. एस सरं एतत्सरः; KMS एस सिरं एतच्छिरः.

**सुप्यदसोऽमुः ॥ ९० ॥**

अदसः स्थाने सुपि परे अमु इत्यादेशो भवति। अमू पुरिसो। **अमुणो** पुरिसा। अमुं वणं। अमूइं वणाइं। अमू महिला। अमूओ महि-**लाओ** ॥ टा—अमुणा। अमूहिं ॥ ङसि—अमूहिंतो अमूओ अमूहि अमूउ **अमुत्तो** ॥ भ्यस्—अमूहिंतो अमूसुंतो ॥ ङस्—अमुणो अमुस्स ॥ आम्—अमूणं ॥ **ङि**-अमुम्मि ॥ सुप्-अमूसु ॥ ९० ॥

**अहद्वा सुना ॥ ९१ ॥**

अदसः सुना सह अहदित्यादेशो भवति तु। तकारस्तावन्मात्रदर्शी-**नार्थः**, तेन स्त्रियामात्वं न भवति। अह पुरिसो। अह महिला। अह वणं। **अह** णे हसइ हिअएण मारुअतणओ, असावस्मान् हसति हृदयेन मारुततनय.॥ **पक्षे**। अमू पुरिसो। अमू महिला। अमुं वण ॥ ९१ ॥

**इआओ म्मौ ॥ ९२ ॥**

अदसो ङिवचनादेशे म्मौ परे इअ अअ इत्यादेशो तु भवतः। इअम्मि। **अअम्मि** ॥ ९२ ॥

॥ इति श्रीमदर्हनन्दित्रैविद्यदेवश्रुतधरश्रीपादप्रसादासादितसर्वविद्याप्रभाव-

श्रीमत्त्रिविक्रमदेवविरचितप्राकृतव्याकरणवृत्तौ

द्वितीयाध्यायस्य द्वितीयः पादः ॥

---

90. KMT om. अमूओ महिलाओ. Colophon · KMS om. from °मदर्ह° down to श्रीमत् T has इति द्वितीयाध्यायस्य द्वितीयः पादः। श्रीत्यागेशाय नमः.

## तृतीयः पादः ॥

**युष्मत्सुना तुवं तुं तुमं तुह ॥ १ ॥**

युष्मच्छब्दः सुना सहितः तुवं तुं तुमं तुह इत्यादेशाश्चतुरः प्राप्नोति। तुवं तुं तुमं तुह दिट्ठो सि ॥ १ ॥

**अमा तुमे तुए च ॥ २ ॥**

युष्मदित्यनुवर्तते। युष्मच्छब्दोऽमा सह तुमे तुए इत्येतौ, चकारात् तुमादिचतुष्टयं चापद्यते। तुमे। तुए ॥ पक्षे। तुवे तुं तुमं तुह वन्दामि ॥ तं इति तु त्वामित्यस्य सिद्धावस्थाया वलोपे ह्रस्वे च ॥२॥

**जसा भे तुब्भे तुय्हे उय्हे तुब्भ ॥ ३ ॥**

युष्मच्छब्दो जसा सह भे तुब्भे तुय्हे उय्हे तुब्भ इति पञ्चादेशानापद्यते। भे तुब्भे तुम्हे उय्हे तुब्भ चिट्ठह। 'वा ब्भो म्हज्झौ' [२·३·१४] इति वचनात् तुम्हे तुज्झे तुम्ह तुज्झ इति नव रूपाणि ॥ ३ ॥

**शसा वो च ॥ ४ ॥**

युष्मच्छब्दः शसा सह वो इति, चकारात् भे इत्यादींश्चादेशानापद्यते। वो भे तुब्भे तुम्हे उय्हे तुब्भ तुम्हे तुज्झे तुम्ह तुज्झ इति दश रूपाणि ॥४॥

---

1. M om. तुं in the Sūtra and Com. T तुहि for तुह in the Sūtra and Com. KS इति चतुर आदेशानाप्नोति for इत्यादेशाश्चतुरः प्राप्नोति. After दिट्ठो सि KS add तं इति तु सिद्धावस्थायां त्वमित्यस्य वलोपे; MT तुं इति सिद्धावस्थायां वलोपे. 2. M तुमादिचतुष्टयं for तुवमादिचतुष्टयं K om. सिद्धावस्थाया. MT तुं इति तु त्वामित्यस्य वलोपे ह्रस्वे च. S ह्रस्वश्च for ह्रस्वे च. 3. KMST हे for भे in the Sūtra and Com. here and elsewhere almost regularly. MT तुम्हे उम्हे for तुब्भे in the Sūtra. T षडादेशान् for पञ्चादेशान्. S ओ व्हो मज्झौ च for वा ब्भो म्हज्झौ. 4. T तुय्भे तुम्हे almost everywhere. S ओ for वो in the Sūtra and Com. KMST युष्मत् for युष्मच्छब्द. KMS हे for भे almost everywhere. T इत्यादेशान् for इत्यादींश्चादेशान्. After कअं KS add एवं दश रूपाणि. M एव for इति.

**टा भे ते दे दि तुमं तुमइ ॥ ५ ॥**

युष्मच्छब्दः टावचनेन सह भे ते दे दि तुमं तुमइ इति षडादेशा-नापद्यते । भे ते दे दि तुमं तुमइ कअं ॥ ५ ॥

**ङिटाभ्यां तुमए तुइ तुए तुंमाइ तुमे ॥ ६ ॥**

युष्मच्छब्दः ङिटाभ्या सह तुमए तुइ तुए तुमाइ तुमे इति पञ्च रूपा-ण्याप्नोति । तुमए तुइ तुए तुमाइ तुमे ठिअं कअं वा ॥ ६ ॥

**तुब्भ तुहिंतो तुम्ह ङसिना ॥ ७ ॥**

युष्मच्छब्दः ङसिना सह तुब्भ तुहिंतो तुम्ह इति त्रीणि रूपाण्यापद्यते । तुब्भ तुहिंतो तुम्ह वा आगओ । 'वा ब्भो म्हज्झौ' [२·३·१४] इति वचनात् तुम्ह तुज्झ ॥ इति पञ्च रूपाणि ॥ ७ ॥

**तु तुइ ङिप्ङसौ ॥ ८ ॥**

ङिप् सप्तमीविभक्तिः, ङसि पञ्चम्येकवचनम्, तयोः परयोर्युष्मच्छब्दो यथासंख्यं तु तुइ इत्येतावादेशावापद्यते । सप्तमीङस्योर्यथाप्राप्तमेव । सप्तम्या तु तुम्मि तुसु ॥ ङसौ—तुइ तुइत्तो तुईहिंतो तुईओ तुईउ आगओ ॥ ८ ॥

**तुव तुम तुह तुब्भ ॥ ९ ॥**

ङिप्ङसावित्यनुवर्तते । ङिपि ङसौ च परे युष्मद् तुव तुम तुह तुब्भ इति चत्वारि रूपाण्यापद्यते । ङिप्ङस्योर्यथाप्राप्तमेव । ङिपि—तुवम्मि तुमम्मि तुहम्मि तुब्भम्मि । 'वा ब्भो म्हज्झौ' [२·३·१४] इति वचनात् तुम्हम्मि तुज्झम्मि। सुपि—तुवेसु तुमेसु तुहेसु तुब्भेसु तुम्हेसु तुज्झेसु ठिअं। 'क्त्वासुपोस्तु

---

5. M om. तुमइ in the Sūtra but has it in Com. MT पञ्च रूपाण्यापद्यते for षडादेशानाप°. 6. KMST युष्मत् for युष्मच्छब्दः. KS रूपाणि प्राप्नोति, for रूपाण्याप्नोति. 7. T तुम्ह for तुब्भ in the Sūtra and Com. T तुय्भ for तुम्ह in the Sūtra and Com. T युष्मत् for युष्मच्छब्दः. 8. M ङिम्ङसोः. for ङिप्ङसौ in the Sūtra. M ङिप्ङसो for सप्तमीङस्योः. T ङिपि for सप्तम्या तु. KS om. सप्तम्यां तु. After तुवेसु KS add तुमेसुं. K दोदुलुक्हि एष्वपि for दोदुहिंतसुतेष्वपि.

सुणात्' [१·१·४३] इत्यनुस्वारे तुवेसुं इत्यादि। ङसौ—तुवाहिंतो तुमाहिंतो तुहाहिंतो तुब्भाहिंतो। 'वा ब्भो म्हज्झौ' [२·३·१४] इति वचनात् तुम्हाहिंतो तुज्झाहिंतो॥ एवं तुवत्तो तुमत्तो तुहत्तो तुब्भत्तो तुम्हत्तो तुज्झत्तो। इति दोदुहिंतसुंतेष्वप्युदाहार्यम्॥ तत्तो इति तु त्वत्त इत्यस्य वलोपे॥ ९॥

**भिसा मेतुब्भेह्युब्भेह्युय्हेहितुय्हेहि॥ १०॥**

युष्मद् भिसा सह मे तुब्भेहिं उब्भेहिं उय्हेहिं तुय्हेहिं इति पञ्च रूपाण्यापद्यते। मे तुब्भेहिं उब्भेहिं उय्हेहिं तुय्हेहिं कथं॥ 'वा ब्भो म्हज्झौ' [२·३·१४] इति वचनात् तुम्हेहिं तुज्झेहिं उम्हेहिं उज्झेहि। एवं नव रूपाणि॥ १०॥

**उम्होय्हतुय्हतुब्भ भ्यसि॥ ११॥**

भ्यसि परे युष्मद् उम्ह उय्ह तुय्ह तुब्भ इति चत्वारि रूपाण्यापद्यते। भ्यसस्तु यथाप्राप्तमेव। उम्हाहिंतो उय्हाहिंतो तुय्हाहिंतो तुब्भाहिंतो आगओ॥ 'वा ब्भो म्हज्झौ' [२·३·१४] इति वचनात् तुम्हाहिंतो तुज्झाहिंतो। उम्हत्तो उय्हत्तो तुय्हत्तो तुब्भत्तो तुम्हत्तो तुज्झत्तो इत्यादि॥ एवं दोदुहिंतसुंतेष्वप्युदा-हार्यम्॥ ११॥

**तुब्भोब्भोय्हतइतुहंतुहतुम्हंतुवतुमतुमेतुमाइतुमोदेतेदितुइए ङसा॥१२॥**

युष्मद् ङसा सह तुब्भ उब्भ उय्ह तइ तुहं तुह तुम्हं तुव तुम तुमे तुमाइ तुमो दे ते दि ति तु इ ए इत्यष्टादशादेशानापद्यते। 'वा ब्भो म्हज्झौ' [२·३·१४]इति वचनात् तुम्ह तुज्झ उम्ह उज्झ इति द्वाविंशतिरूपाणि॥१२॥

**तुम्हाणतुब्भंतुब्भाणतुमाणतुवाणतुहाणतुब्भवोमे त्वामा॥ १३॥**

युष्मदामा सह तुम्हाण तुब्भं तुब्भाण तुमाण तुवाण तुहाण तुब्भ वो मे त्वा इति दशादेशानापद्यते। तुम्हाण तुब्भं। 'वा ब्भो म्हज्झौ' [२·३·१४] इति वचनात् तुम्हं तुज्झं तुब्भाण तुम्हाण तुज्झाण तुब्भ तुम्ह तुज्झ वो मे त्वा॥ 'क्त्वासुपोस्तु सुणात्' [१·१·४३] इत्यनुस्वारे तुम्हाणं तुब्भाणं तुज्झाणं तुमाणं तुवाणं तुहाणं॥ एवं त्रयोविंशतिरूपाणि॥ १३॥

---

11. MS तुम्हो for उम्हो in the Sūtra and Com. 12. KS तुब्भ तुम्ह उब्भ उम्ह for तुब्भ उम्ह उय्ह. After ए KS add धणं.

**वा ब्भो म्हज्झौ ॥ १४ ॥**

युष्मदादेशसंबन्धिनो द्विरुक्तस्य भकारस्य म्ह ज्झ इत्यादेशौ वा भवतः। तच्च यथास्थानमुदाहृतमेव ॥ १४ ॥

**अस्मत्सुना अम्हिहमहअमहमहम्म्यम्मि ॥ १५ ॥**

अस्मच्छब्दः सुना प्रथमैकवचनेन सह अम्हि हं अहअं अहं अहम्मि अम्मि इति षडादेशानाप्नोति । अम्मि करेमि, अहं करोमि । तेण हं दिट्ठो, तेनाहं दृष्टः । अहअं जप्पामि, अहं जल्पामि । अहं गमिस्सं, अहं गमिष्यामि । अज्ज अहम्मि हासिआ, अद्याहं हासिता । न अम्मि कुविआ, नाहं कुपिता ॥ १५ ॥

**मो भे वअं जसा ॥ १६ ॥**

अस्मदित्यनुवर्तते । जसा सहास्मच्छब्दः मो भे वअं इति त्रीनादेशानापद्यते । मो भणामो इत्यादि ॥ १६ ॥

**अम्हे अम्हो अम्ह ॥ १७ ॥**

अस्मच्छब्दः जसा सह अम्हे अम्हो अम्ह इति त्रीनादेशानापद्यते । योगविभाग उत्तरार्थः ॥ अम्हे इत्यादि ॥ १७ ॥

**णे च शसा ॥ १८ ॥**

शसा सहास्मच्छब्दः णे इति, चकारात् अम्हे इत्यादि त्रीनादेशाश्चापद्यते । णे अम्हे पेच्छ इत्यादि ॥ १८ ॥

**मं णे णं मि मिमं ममम्मि अहं मम्हाम्ह अमा ॥ १९ ॥**

अस्मच्छब्दः अमा सह मं णे णं मि मिमं ममं अम्मि अहं मम्ह अम्ह इति दशादेशानापद्यते ॥ मं पेच्छ इत्यादि ॥ १९ ॥

---

14. After उदाहृतमेव S adds in margin: अस्मच्छब्दः. 15. KS सहितः for सह. KS °देशानापद्यते for °देशानाप्नोति. KS अज्जम्मि हासिआ for अज्ज अहम्मि हासिआ. 16. M मो हे वअ भणिमो for मो भणामो इत्यादि. 17. KM अस्मज्जसा सह for अस्मच्छब्दः जसा सह. KMS अम्हे अम्हो अम्ह पेच्छामो for अम्हे पेच्छामो इत्यादि. 18. KM इत्यादेशांश्चापद्यते for इत्यादि त्रीनादेशानापद्यते. After णे KM add अम्हो अम्ह. 19. KS णं मे etc पेच्छ for मं पेच्छ इत्यादि.

**मि मइ ममाइ मए मे ङिटा ॥ २० ॥**

ङिवचनेन टावचनेन सहास्मच्छब्दः मि मइ ममाइ मए मे इति पञ्चा-देशानापद्यते। मि ठिअं कअं वा इत्यादि ॥ २० ॥

**ममं णे मआइ ममए टा ॥ २१ ॥**

टावचनेन सहास्मच्छब्दः ममं णे मआइ ममए इति चतुर आदेशा-नापद्यते। ममं कअं इत्यादि ॥ २१ ॥

**णेऽम्हेह्यम्हाह्यम्हेऽम्ह भिसा ॥ २२ ॥**

भिसा सहास्मच्छब्दः णे अम्हेहि अम्हाहि अम्हे अम्ह इति पञ्चा-देशानापद्यते। णे कअं इत्यादि ॥ २२ ॥

**मइ मम मह मज्झ ङसौ ॥ २३ ॥**

ङसौ पञ्चम्येकवचने परे अस्मच्छब्दः मइ मम मह मज्झ इति चतुर आदेशानापद्यते। ङसेस्तु यथाप्राप्तमेव। मईहिंतो मइत्तो मईओ मईउ। एवं ममाहिंतो ममत्तो ममाउ ममाहि ममा ॥ एवं महाहिंतो महत्तो मज्झाहिंतो मज्झत्तो इत्यादि ॥ २३ ॥

**अम्ह मम भ्यसि ॥ २४ ॥**

भ्यसि पञ्चमीबहुवचने परे अस्मच्छब्दः अम्ह मम इत्यादेशावापद्यते। अम्हाहिंतो अम्हेहिंतो अम्हत्तो अम्हाओ अम्हाउ अम्हासुंतो अम्हेसुंतो अम्हाहिं अम्हेहिं। ममाहिंतो ममेहिंतो ममत्तो ममाओ ममाउ ममासुंतो ममाहिं ॥ २४ ॥

**अम्हं मज्झं मज्झ मइ मह महं मे च ङसा ॥ २५ ॥**

ङसा सह अस्मच्छब्दः अम्हं मज्झं मज्झ मइ मह महं मे इति सप्ता-देशान्, चकारादम्हममौ चापद्यते ॥ अम्हं इत्यादि ॥ २५ ॥

24. KMS om. अम्हेहिंतो.

**अम्हे अम्हो अम्हाण ममाण महाण मज्झाण मज्झाम्हाम्हं णे णो आमा ॥ २६ ॥**

आमा सह अस्मच्छब्दः अम्हे अम्हो अम्हाण ममाण महाण मज्झाण मज्झ अम्ह अम्हं णे णो इत्येकादशादेशानाप्नोति। अम्हे धणं इत्यादि। 'क्त्वासुपोस्तु सुणात्' [ १·१·४३ ] इत्यनुस्वारे। अम्हाणं ॥ एवं पञ्चदश रूपाणि ॥ २६ ॥

**अम्ह मम मज्झ मह ङिपि ॥ २७ ॥**

सप्तमीविभक्तौ परतः अस्मच्छब्दः अम्ह मम मज्झ मह इति चतुर आदेशानापद्यते। ङिपो यथाप्राप्तमेव। ङि—अम्हम्मि ममम्मि मज्झम्मि महम्मि ॥ सुप्—अम्हेसु ममेसु मज्झेसु महेसु ॥ एत्वविकल्पमते अम्हसु ममसु मज्झसु महसु ॥ आत्वमपीच्छन्त्यन्ये। अम्हासु ममासु मज्झासु महासु ॥ 'क्त्वासुपोस्तु सुणात्' [१·१·४३] इत्यनुस्वारे। अम्हेसुं ममेसुं मज्झेसुं महेसुं। अम्हसुं ममसुं मज्झसुं महसुं। अम्हासुं ममासुं मज्झासुं महासुं ॥ एवमष्टादश रूपाणि ॥ २७ ॥

**चतुरो जश्शस्भ्यां चउरो चत्तारो चत्तारि ॥ २८ ॥**

चतुश्शब्दस्य जश्शस्भ्यां सह चउरो चत्तारो चत्तारि इति त्रय आदेशा भवन्ति। चउरो चत्तारो चत्तारि चिट्ठन्ति पेच्छ वा ॥ २८ ॥

**तिण्णि त्रेः ॥ २९ ॥**

जश्शस्भ्यामिति वर्तते। त्रिशब्दस्य जश्शस्भ्यां सह तिण्णि इत्यादेशो भवति। तिण्णि पुरिसा महिला वणाणि वा चिट्ठन्ति पेच्छ वा ॥ २९ ॥

**दोण्णि दुवे बेण्णि द्वे ॥ ३० ॥**

द्विशब्दस्य जश्शस्भ्यां सह दोण्णि दुवे बेण्णि इति त्रय आदेशा भवन्ति। दोण्णि दुवे बेण्णि महिला चिट्ठन्ति पेच्छ वा ॥ 'संयोगे' [ १·२·४० ] इति ह्रस्वे। दुण्णि। बिण्णि ॥ ३० ॥

---

27. KS read ङिपि before सप्तमीविभक्तौ. K आत्वमिच्छन्त्यन्ये; S--आत्वमपीच्छत्यन्यः for आत्वमपीच्छन्त्यन्ये. 29. KMS अनुवर्तते for वर्तते. 30. S om. पेच्छ वा.

**दो बे टादौ च ॥ ३१ ॥**

द्वेरिति वर्तते । द्विशब्दस्य टादौ तृतीयादौ विभक्तौ परतः दो बे इत्यादेशौ भवतः । चकाराज्जश्शस्भ्यां सहितस्य च । दोहिं बेहि कअं । दोहिंतो बेहिंतो आगओ । दोण्णं बेण्णं धणं । दोसु बेसु ठिअं ।। जश्शस्भ्याम् । दो बे ठिआ पेच्छ वा ॥ ३१ ॥

**ति त्रेः ॥ ३२ ॥**

टादावित्यनुवर्तते । त्रिशब्दस्य टादौ परे ति इत्यादेशो भवति । तिहिं कअं, त्रिभिः कृतं तिसृभिर्वा । तिहिंतो आगओ, त्रिभ्यः तिसृभ्यो वा आगतः । तिणं धणं, त्रयाणा तिसृणा वा धनम् । तिसु ठिअं, त्रिषु तिसृषु वा स्थितम् ॥ ३२ ॥

**ण्ह ण्हं संख्याया आमोऽविंशतिगे ॥ ३३ ॥**

संख्याशब्दात्परस्यामः ण्ह ण्हं इत्यादेशौ भवतः, अविंशतिगे विंशत्यादीन्वर्जयित्वा । दोण्ह तिण्ह । दोण्हं तिण्हं । चउण्ह चउण्हं । पञ्चण्ह पञ्चण्हं । छण्ह छण्हं । सत्तण्ह सत्तण्हं । अट्ठण्ह अट्ठण्हं । नवण्ह नवण्हं । दसण्ह दसण्हं । पण्णारहण्ह पण्णारहण्हं । अट्ठारहण्ह अट्ठारहण्हं । कइण्ह कइण्हं । कतीनाम् ॥ अविंशतिगे इति किम् । वीसाणं । तिसाणं ॥३३॥

**द्विवचनस्य बहुवचनम् ॥ ३४ ॥**

सर्वासा विभक्तीना स्वादीना तिङादीना च द्विवचनस्य स्थाने बहुवचनं भवति । दोण्णि कुणन्ति, द्वौ कुरुतः । दोहिं । दोसुंतो । दोण्हं दोसु ॥ दो पाआ, द्वौ पादौ । दोण्गि हत्था, द्वौ हस्तौ । दुवे णअणा, द्वे नयने । बेण्णि कण्णा, द्वौ कर्णौ ॥ ३४ ॥

**ङेसो ङम् ॥ ३५ ॥**

ङेस् चतुर्थी विभक्तिः, ङम् षष्ठीविभक्तिः । ङेसः स्थाने ङम् भवति । मुणिस्स, मुणीणं भोअणं देहि ॥ णमो देवस्स, देवाणं ॥ ३५ ॥

---

31. K दो दे टादौ च; S दो वे दावौ च for the Sūtra. 33. KM अट्ठरसण्हं समसाहसाण कइण्ह for अट्ठारहण्हं कइण्हं.

**तादर्थ्ये ङेस्तु ॥ ३६ ॥**

तादर्थ्ये विहितस्य ङेः चतुर्थ्येकवचनस्य स्थाने ङम् षष्ठी तु भवति। देवस्स देवाअ, देवार्थमित्यर्थः ॥ ङेरिति किम्। देवाणं ॥ ३६ ॥

**वधाड्डाइ च ॥ ३७ ॥**

त्वित्यनुवर्तते। वधशब्दात्परस्य ङेःस्थाने डित् आइ इत्यादेशः षष्ठी चतुर्थी च भवति। वहाइ वहस्स वहाअ। वधार्थमित्यर्थः ॥ ३७ ॥

**क्वचिदसादेः ॥ ३८ ॥**

अस् द्वितीयाविभक्तिः। असादीना विभक्तीना स्थाने षष्ठीविभक्तिः क्वचिद्भवति। सीमंधरस्स वन्दे, सीमंधरं वन्दे। तिस्सा मुहस्स भरिमो, तस्या मुखं स्मरामः। अत्र द्वितीयायाः ॥ धणस्स लद्धं, धनेन लब्धम्। तेसिमेस-मणाइण्णं, तैरेतदनाचीर्णम्। अत्र तृतीयायाः ॥ चोरस्स बीहइ, चोरा-द्बिभेति। इमाण पाअन्तसहिआण इअराइं लहुअक्खराइं ति, एभ्यः पादान्त-सहितेभ्य इतराणि लघ्वक्षराणि। अत्र पञ्चम्याः ॥ वणसिरिपट्ठीएँ कबरि व्व, वनश्रीपृष्ठे कबरीव। अत्र सप्तम्याः ॥ ३८ ॥

**अस्टासोर्ङिप् ॥ ३९ ॥**

अस् द्वितीया, टास् तृतीया, तयोः स्थाने ङिप् सप्तमी क्वचिद्भवति तु। गामे वहामि, णअरे णआमि, ग्रामं वहामि, नगरं नयामि। अत्र द्वितीयायाः ॥ तेसुं अलंकिआ पुहवी, तैरलंकृता पृथिवी। अत्र तृतीयायाः ॥ ३९ ॥

---

37. S डायि for डाइ in the Sūtra. 38. KS तिस्सा मुहस्स सरिमो; M तिस्सा मुहं सरिमो for तिस्सा मुहस्स भरिमो. KS धणस्स लद्धो for धणस्स लद्धं. After लद्ध KMS add चिरस्स मुक्का चिरेण मुक्ता. KMS इअ-राण जाण लहुअक्खराइं पाअन्तिमिल्लसहिआण, इतरेभ्यः एभ्यः पादान्तेन सहितेभ्यः इतराणि लघ्वक्षराणि for इमाण...लघ्वक्षराणि. S लघ्वक्षराणीत्यर्थः. M वणसि-रिवट्टीअ for °वट्टीए. 39. S ङिसू for ङिप् in the Sūtra. KS तिह तेसु अलंकिआ पुहुवी for तेसुं अलंकिआ पुहवी.

**ङसिसष्टाश्च ॥ ४० ॥**

ङसिसः पञ्चम्याः स्थाने टास् तृतीया, चकारात्सप्तमी च क्वचिद्भवति। चोरेण बीहइ, चोराद्बिभेति। अन्तेउरे रमिअ आगओ, अन्तःपुराद्रन्त्वागतः ॥ ४० ॥

**ङिपोऽस् ॥ ४१ ॥**

ङिपः सप्तम्याः स्थाने अस् द्वितीया क्वचिद्भवति। विज्जुज्जोअं भरइ रइं, विद्युद्द्योते स्मरति रतिम् ॥ ४१ ॥

**लुक्क्यङोर्यस्य तु ॥ ४२ ॥**

क्यङन्तस्य द्विवचनात् क्यषन्तस्य च संबन्धिनो यस्य लुग् भवति तु। क्यङ्—गुरूअइ गुरूइ, अगुरुर्गुरुर्भवति, गुरुरिवाचरति वा ॥ क्यष्—धमधमाअइ धमधमाइ। लोहिआअइ लोहिआइ ॥ ४२ ॥

॥ इति श्रीमदर्हनन्दित्रैविद्यदेवश्रुतधरश्रीपादप्रसादासादितसमस्तविद्याप्रभाव-
श्रीमत्त्रिविक्रमदेवविरचितप्राकृतव्याकरणवृत्तौ
द्वितीयाध्यायस्य तृतीयः पादः ॥

---

41. S ङ्सोप् for the Sūtra. S हरइ for भरइ. 42. KMS गुरुआइ गुरुआअइ for गुरूअइ गुरूइ. Colophon: KSM om. from °मदर्ह down to श्रीमत्. KMST द्वितीयस्याध्यायस्य for द्वितीयाध्यायस्य.

## चतुर्थः पादः ॥

**लटस्तितझाविजेच् ॥ १ ॥**

लट् वर्तमानं तत्संबन्धिनः प्रथमपुरुषस्य एकत्वे वर्तमानौ यौ परस्मैपदात्मपदत्वेन विहितौ तिप् तङ् इत्येतौ प्रत्येकं इच् एच् च इत्येतौ भवतः। चकारौ 'ह्रुरचिति'[३·१·५]इति विशेषणार्थौ। हसइ हसए। रमइ रमए॥१॥

**सिप्थास्सेसि ॥ २ ॥**

लट इत्यनुवर्तते। परस्मैपदात्मनेपदयोर्मध्यमपुरुषस्य एकत्वे वर्तमानौ सिप् थास् इत्येतौ प्रत्येकं से सि इत्येतौ तु भवतः। हससे हससि। रमसे रमसि ॥ २ ॥

**मिर्मिबिटौ ॥ ३ ॥**

लटः परस्मैपदात्मनेपदोत्तमपुरुषैकवचनत्वे वर्तमानौ मिप् इट् इत्येतौ प्रत्येकं मि इति भवतः। हसामि। रमामि॥ बहुलाधिकारात् मिबिटोरादेशस्य मेरिकारस्य लोपश्च। बहु वण्णिउं न सक्कं, बहु वर्णितुं न शक्नोमि। न मरं, न म्रिये ॥ ३ ॥

**झिझौ न्ति न्ते इरे ॥ ४ ॥**

लटः प्रथमपुरुषस्य बहुत्वे वर्तमानौ झि झ इत्येतौ प्रत्येकं न्ति न्ते इरे इति त्रीनादेशानापद्येते। हसन्ति हसन्ते। रमन्ति रमन्ते। हसिज्जन्ति हसिज्जन्ते। रमिज्जन्ति रमिज्जन्ते। गज्जन्ते खे मेहा। उप्पज्जन्ते कइहिअअसाअरे कव्वरअणाइं। दोण्णि वि ण पहुप्पिरे बाहू, द्वावपि न प्रभवतो बाहू॥ क्वचिदेकत्वे इरे। सूसइरे ताण तारिसो कण्ठो, शुष्यति तासां तादृशः कण्ठः ॥ ४ ॥

---

1. MST इचेच् for इजेच् in the Sūtra. T वर्तमानात् for वर्तमानं. MST त for तङ्. T इत्यादेशौ for इत्येतौ. S एच्च भवतः for एच्च इत्येतौ भवतः. S विशेषणार्थः for विशेषणार्थौ. 2. KM मध्यमपुरुषैकत्वे for °षस्य एकत्वे. After वर्तमानौ M adds यौ. M इत्यादेशौ for इत्येतौ. M om. तु. 3. ST मि for मिर् in the Sūtra and Com. T om. प्रत्येकं. M इकारलोपश्च for इकारस्य लोपश्च. After सक्कं M adds आइं दीसंति सरअपिडाइं. 4 BT om. दोण्णि वि ण and द्वावपि न. S om. रमन्ति रमन्ते. T om. कइ...णाइं. K om. तारिसो. T कर्णः for कण्ठः.

**थध्वमित्थाहचौ ॥ ५ ॥**

लटो मध्यमपुरुषबहुत्वे वर्तमानौ थ ध्वम् इत्येतौ प्रत्येकं इत्था हच् इत्यादेशावापद्येते। हसित्था हसह। रमित्था रमह ॥ बहुलाधिकारात् इत्था अन्यत्रापि। जं जं ते रोइत्था, यद्यत्ते रोचते ॥ हच् इति चकारः 'इहहचोः' [३.२.५] इति विशेषणार्थः ॥ ५ ॥

**मो म मु मस्महिङ् ॥ ६ ॥**

लट उत्तमपुरुषबहुत्वे वर्तमानौ मस् महिङ् इत्येतौ प्रत्येक मो म मु इति त्रीनादेशानापद्येते। हसामो हसाम हसामु। रमामो रमाम रमामु ॥ ६ ॥

**अत एवैच् से ॥ ७ ॥**

लट. प्रथमपुरुषस्य एकत्वे य एच्, यश्च मध्यमपुरुषैकत्वे विहितः से, तौ अकारान्तादेव भवतः, नान्यस्मात्। हसए हससे। तुवरए तुवरसे। करए करसे ॥ अत इति किम्। ठाइ ठासि। वसुआइ वसुआसि। होइ होसि ॥ ७ ॥

**त्वस्तेर्म्हम्होम्हि ममोमिना ॥ ८ ॥**

अस्तेर्धातोः स्थाने म मो मि इत्येतैः सह यथासंख्यं म्ह म्हो म्हि इत्यादेशा भवन्ति तु। गअ म्ह गअ म्हो गअ म्हि, गताः स्मः। एस म्हि, एषोऽस्मि। मुकारस्याग्रहणादप्रयोग एव तस्येत्यवसीयते। पक्षे। अत्थि अम्हे। अत्थि अहं ॥ ८ ॥

**सिना ल्सि ॥ ९ ॥**

अस्तेरित्यनुवर्तते। अस्तेर्धातोः सिना मध्यमपुरुषैकवचनादेशेन सह सि इत्यादेशो लिद्भवति। णिट्ठुरो जं सि, निष्ठुरो यदसि ॥ सिनेति किम्। सेआदेशे सति। अत्थि तुमं ॥ ९ ॥

---

5. S हसेत्था for हसित्था. B जं ते for जं जं ते; B यत्ते for यद्यत्ते. 6. S °पुरुषस्य बहुत्वे for पुरुषबहुत्वे. 7. After एकत्वे S adds विहितो. B वसुजाइ वसुजासि; S वसुजाइ for वसुआइ वसुआसि. After वसुआसि K adds उद्धाइ उद्धासि; S adds उद्दासि; T adds उट्टाइ उट्टासि. 8. K इत्यादेशैः for इत्येतैः M om. तु. 9. M सिनाल् for the Sūtra.

**तिङास्थि ॥ १० ॥**

अस्तेस्तिङा तिबादिना सह अत्थि इत्यादेशो भवति। अत्थि सो। अत्थि ते। अत्थि तुमं। अत्थि तुम्हे। अत्थि अहं। अत्थि अम्हे ॥ १० ॥

**णिजदेदावावे ॥ ११ ॥**

धातोः प्रेरणार्थे विहितो यो णिच्प्रत्ययः, सः अत् एत् आव आवे इति चतुर आदेशानाप्नोति। तकारस्तावन्मात्रत्वप्रदर्शनार्थः। अत्–दरिसइ॥ एत्–कारेइ ॥ आव–कारावइ ॥ आवे–कारावेइ ॥ हासावइ हासइ हासावेइ हासेइ ॥ उवसमावइ उवसमेइ ॥ बहुलाधिकारात्क्वचिदेन्नास्ति। जाणइ जाणावइ जाणावेइ ॥ क्वचिदावे नास्ति। धावइ धावेइ धावावइ ॥ ११ ॥

**शुष्यादेरविर्वा ॥ १२ ॥**

णिजित्यनुवर्तते। शुष्यादिणिचः अविः इति वा भवति। शोषितं सोसाविअं सोसिअं ॥ तोषितं तोसाविअं तोसिअं ॥ १२ ॥

**भ्रमेराडः ॥ १३ ॥**

भ्रमेर्धातोः परो णिच् आड इति वा भवति। भमाडइ ॥ पक्षे। भामइ भामेइ भमावइ भमावेइ ॥ १३ ॥

**लुगाविल् भावकर्मक्ते ॥ १४ ॥**

भावकर्मविहिते प्रत्यये क्तप्रत्यये च परे णिच् लुक् आवि इत्यादेशावाप्नोति। लित्त्वान्न विकल्पः॥ भावकर्मणोः। कारिअइ काराविअइ कारिज्जइ काराविज्जइ। हासिअइ हासाविअइ हासिज्जइ हासाविज्जइ ॥ क्ते। कारिअं काराविअं। हासिअं हासाविअं। खामिअ खामाविअ ॥ १४ ॥

---

10. M तिङा अत्थि for the Sūtra. 11. S तावन्मात्रदर्शनार्थः for तावन्मात्रत्वप्रदर्शनार्थः. M करावेइ for कारावइ. After उवसमावइ K adds उवसमावेइ K आणावेइ for जाणइ जाणावेइ. B थावइ थावेइ थावावइ for धावइ धावेइ. M om. धावावइ. 12. S शुष्यादिः in the Sūtra. M शुष्यादिर्णिच् for शुष्यादिणिचः. 13. MS om. भामइ भामेइ. 14 MS om. क्तप्रत्यये. MST लुक for लुक्. KMS इत्यादेशं चाप्नोति for इत्यादेशावाप्नोति. M कारीअइ करावीअइ for कारिअइ काराविअइ. MS हसाविअइ for हासा°. S खमविअं for खामाविअं.

**रचेर्विडविड्डावहोग्गहाः ॥ ४३ ॥**

रचि प्रतियत्ने इत्यस्य धातोः विडविड्ड अवह उग्गह इति त्रय आदेशा भवन्ति तु। विडविड्डइ। अवहइ। उग्गहइ। रअइ ॥ ४३ ॥

**केवलाअसारवसमारोवहत्थाः समारचेः ॥ ४४ ॥**

समारचेः केवलाअ सारव समार उवहत्थ इति चत्वार आदेशा भवन्ति तु। केवलाअइ। सारवइ। समारइ। उवहत्थइ। समारअइ ॥ ४४ ॥

**मस्जेराउड्डणिउड्डबुड्डखुप्पाः ॥ ४५ ॥**

टुमस्जी शुद्धौ इत्यस्य धातोः आउड्ड णिउड्ड बुड्ड खुप्प इति चत्वार आदेशा भवन्ति तु। आउड्डइ। णिउड्डइ। बुड्डइ। खुप्पइ। मज्जइ ॥ ४५ ॥

**अनुव्रजतेः पडिअग्गः ॥ ४६ ॥**

व्रज गतौ इत्यस्य धातोः अनुपूर्वस्य पडिअग्ग इत्यादेशो भवति तु। पडिअग्गइ। अणुवअइ ॥ ४६ ॥

**वञ्चेर्वेहववेलवजूरवोम्मच्छाः ॥ ४७ ॥**

वञ्चतेः वेहव वेलव जूरव उम्मच्छ इति चत्वार आदेशा भवन्ति तु। वेहवइ। वेलवइ। जूरवइ। उम्मच्छइ। वञ्चइ ॥ ४७ ॥

---

43. Bp KM °होद्दहाः; S °होंटहाः in the Sūtra. ST प्रयत्ने for प्रतियत्ने. KM उद्दह उद्दहइ. 44. M केलाअ° for केवलाअ° in the Sūtra, Com. and illustrations. T om. समारअइ. 45. S मंजेः for मस्जेः in the Sūtra and Com. K °कुप्पाः; S °कुंपाः for खुप्पाः in the Sūtra. 46. T पडिअद्दः for पडिअग्गः in the Sūtra, Com. and illustrations. M अणुवज्जइ; T अणुवच्चइ for °वअइ. 47. M वंचतेः in the Sūtra. S °जारव°, T °झारव in the Sūtra, Com. and illustrations. M °उमच्छाः in the Sūtra and Com.

**रोसाणोबुसलुहलुच्छपुच्छफुसफुस्सघसहुला मार्ष्टेः ॥ ४८ ॥**

मृजू शुद्धौ इत्यस्य धातोः रोसाण उबुस लुह लुच्छ पुच्छ फुस फुस्स घस हुल इति नवादेशा भवन्ति तु । रोसाणइ । उबुसइ । लुहइ । लुच्छइ । पुच्छइ । फुसइ । फुस्सइ । घसइ । हुलइ ॥ पक्षे । मज्जइ ॥ ४८ ॥

**भञ्जेर्वेमअमुसुमूरमूरपविरज्जसूरसूडकरञ्जनिरञ्जविराः ॥ ४९ ॥**

भञ्जी आमर्दने इत्यस्य धातोः वेमअ मुसुमूर मूर पविरज्ज सूर सूड करञ्ज निरञ्ज विर इति नवादेशा भवन्ति तु । वेमअइ । मुसुमूरइ । मूरइ । पविरज्जइ । सूरइ । सूडइ । करञ्जइ । निरञ्जइ । निरइ ॥ पक्षे । भञ्जइ ॥ ४९ ॥

**गर्जेर्बुक्कः ॥ ५० ॥**

गर्जतेः बुक्क इत्यादेशो भवति तु । बुक्कइ ॥ गज्जइ ॥ ५० ॥

**डिक्को वृषे ॥ ५१ ॥**

वृषकर्तृकस्य गर्जतेः डिक्क इत्यादेशो वा भवति । डिक्कइ, वृषो गर्जतीत्यर्थः ॥ ५१ ॥

**तिजेरोसुक्कः ॥ ५२ ॥**

तिज निशातने इत्यस्य धातोः ओसुक्क इत्यादेशो भवति तु । ओसुक्कइ । तेअइ । तेअणं ॥ ५२ ॥

**आरोलवमालौ पुञ्जेः ॥ ५३ ॥**

पुञ्जेः आरोल वमाल इत्यादेशौ वा भवतः । आरोलइ । वमालइ । पुञ्जइ ॥ ५३ ॥

---

48. T उग्घुस° for उबुस in the Sūtra, Com. and illustrations. MT °लुंछपुंछ° for °लुच्छपुच्छ° in the Sūtra, Com. and illustrations. M °पुस°; T पुस्स for फुस in the Sūtra. Com. and illustrations. T om. °घस° in the Sūtra, Com. and illustrations. 49. T वेअमअ° for वेंमअ° in the Sūtra. S °परिरंज° for °पविरज्ज° in the Sūtra, Com. and illustrations. T °नीरंज° for °निरज्ज° in the Sūtra, Com. and illustrations. 50. S गर्जतेर्भुक्कः; T गर्जतेर्बुक्कः for the Sūtra. S भुक्कइ for बुक्कइ. 52. B निशाने for निशातने. 53. Bp वमूलौ for °वमालौ in the Sūtra. MST पुंजिरारोल वमाल इत्यादेशावापद्यते.

**कम्मवमुपभुजि ॥ ५४ ॥**

उपपूर्वको भुजिः कम्मव इत्यादेशमापद्यते तु। कम्मवइ। उवभुञ्जइ॥५४॥

**विडवमर्जिः ॥ ५५ ॥**

अर्जिः विडव इत्यादेशमापद्यते तु। विडवइ। अज्जइ ॥ ५५ ॥

**लज्जेर्जीहः ॥ ५६ ॥**

ओलस्जी व्रीडायाम् इत्यस्य धातोः जीह इत्यादेशो भवति तु। जीहइ। लज्जइ ॥ ५६ ॥

**राजेः सहरेहच्छज्जरिराग्घाः ॥ ५७ ॥**

राजृ दीप्तौ इत्यस्य धातोः सह रेह छज्ज रिर अग्घ इति पञ्चादेशा भवन्ति तु। सहइ। रेहइ। छज्जइ। रिरइ। अग्घइ। राअइ ॥ ५७ ॥

**घटेर्गडः ॥ ५८ ॥**

घटतेर्गड इत्यादेशो भवति तु। गडइ। घडइ ॥ ५८ ॥

**समो गलः ॥ ५९ ॥**

समः परस्य घटतेर्गल इत्यादेशो भवति तु। संगलइ। संघडइ॥५९॥

**हासेन स्फुटतेर्मुरः ॥ ६० ॥**

हासेन करणेन प्रयुज्यमानो यः स्फुट विकसने इति धातुः तस्य मुर इत्यादेशो भवति तु। मुरइ, हासेन स्फुटतीत्यर्थः ॥ ६० ॥

**मण्डेष्टिविडिक्करिडचिश्चचिश्चिल्लचिञ्चआः ॥ ६१ ॥**

मडि भूषायाम्। इत्यस्य धातोः टिविडिक्क रिड चिश्च चिश्चिल्ल चिञ्चअ इति पञ्चादेशा वा भवन्ति। टिविडिक्कइ। रिडइ। चिश्चइ। चिश्चिल्लइ। चिञ्चअइ ॥ पक्षे। मण्डइ ॥ ६१ ॥

---

55. B पिडव in the Sūtra, Com. and illustrations. S पिढवइ for विडवइ. 56. M लस्जेः for लज्जेः. in the Sūtra. T लज्ज for ओलस्जी. 57. MT °रीर° for रिर° in the Sūtra, Com. and illustrations. 58. T गढः for गडः in the Sūtra and Com. 59. S संघलइ for संघडइ. 60 T विकासने for विकसने. M इत्ययं for इति. BS इत्यस्य धातोः तस्य for इति धातुः तस्य. 61. M टिविढिक्क° for टिविडिक्क° in the Sūtra, Com. and illustrations. T °रीड° for °रिड° in the Sūtra, Com. and illustrations. T °चिंछिल्ल° in the Sūtra, and Com.

**तुडिरुल्लुकणिल्लुकोल्लूरोक्खुडलुक्कतोडखुट्टखुडान् ॥ ६२ ॥**

तुड तोडने इत्ययं धातुः उल्लुक णिल्लुक उल्लूर उक्खुड लुक्क तोड खुट्ट खुड इत्यष्टादेशानापद्यते । उल्लुक्कइ । णिल्लुक्कइ । उल्लूरइ । उक्खुडइ । लुक्कइ । तोडइ । खुट्टइ । खुडइ ॥ पक्षे । तुडइ ॥ तुट्टइ इति तु त्रुटेः शकादिद्वित्वे [ २·४·६३ ] भविष्यति ॥ ६२ ॥

**घुसलविरोलौ मन्थेः ॥ ६३ ॥**

मन्थ विलोडने इत्यस्य धातोः घुसल विरोल इत्यादेशौ तु भवतः । घुसलइ । विरोलइ । मन्थइ ॥ ६३ ॥

**ढंसोत्थङ्घौ विवृतिरुध्योः ॥ ६४ ॥**

विपूर्वस्य वृतु वर्तने इत्यस्य, रुधि आवरणे इत्यस्य च धातोः क्रमेण ढंस उत्थङ्घ इत्यादेशौ तु भवतः । ढंसइ ॥ पक्षे । विवट्टइ ॥ उत्थङ्घइ । पक्षे । रुन्धइ ॥ ६४ ॥

**णिहर आक्रन्देः ॥ ६५ ॥**

आङ्पूर्वस्य क्रन्देः णिहर इत्यादेशो भवति तु। णिहरइ । अक्कन्दइ॥ ६५॥

**ओअन्दोद्दालौ छिदेराङा ॥ ६६ ॥**

छिदिर् द्वैधीकरणे इत्यस्य धातोः आङा सहितस्य ओअन्द उद्दाल इत्यादेशौ तु भवतः। ओअन्दइ । उद्दालइ ॥ अच्छिन्दइ ॥ ६६ ॥

**णिल्लूरलूरणिव्वरणिच्छल्लदुहावणिज्झोडाः ॥ ६७ ॥**

छिदेरिति वर्तते । छिदेः णिल्लूर लूर णिव्वर णिच्छल्ल दुहाव णिज्झोड इति षडादेशा वा भवन्ति । णिल्लूरइ । लूरइ । णिव्वरइ । णिच्छल्लइ । दुहावइ । णिज्झोडइ ॥ पक्षे । छिन्दइ ॥ ६७ ॥

---

62. M °णिलुक्क° for °णिल्लुक° the Sūtra, Com. and illustrations. T °तोढ° for तोड° in the Sūtra. K °खुट्टकुड्डान्; S °खुटकुडान् in the Sūtra. KMS कुड्ड for खुड. KMS कुड्डइ. for कुडइ 63. K °विलोलौ for विरोलौ, in the Sūtra. 64. S डस°, T ढस्स° for ढंस° in the Sūtra, Com. and illustrations. T °उत्थग्घौ in the Sūtra, Com. and illustrations. 65. MT णीहर for णिहर in the Sūtra, Com and illustrations. KM कंदतेः for क्रन्देः. 67. K °णिव्वरः°; M °णिव्वल°; T °णिप्पल° in the Sūtra, Com and illustrations.

**अट्टः क्वथेः ॥ ६८ ॥**

क्वथ निष्पाके इत्यस्य धातोः अट्ट इत्यादेशो भवति तु। अट्टइ। कढइ ॥ ६८ ॥

**कथेर्वज्जरपज्जरसग्घसाससाहचवजप्पपिसुणबोल्लोव्वालाः ॥ ६९ ॥**

कथयतेः वज्जर पज्जर सग्घ सास साह चव जप्प पिसुण बोल्ल उव्वाल इति दशादेशा वा भवन्ति। वज्जरइ। पज्जरइ। सग्घइ। सासइ। साहइ। चवइ। जप्पइ। पिसुणइ। बोल्लइ। उव्वालइ ॥ पक्षे। कहइ ॥ ६९ ॥

**दुःखे णिव्वरः ॥ ७० ॥**

दुःखविषयस्य कथयतेः णिव्वर इत्यादेशो भवति तु। णिव्वरइ, दुःखं कथयतीत्यर्थः ॥ ७० ॥

**निषेधेर्हक्कः ॥ ७१ ॥**

निपूर्वस्य षिधू शास्त्रे माङ्गल्ये च इत्यस्य धातोः हक्क इत्यादेशो भवति तु। हक्कइ। णिसेहइ ॥ ७१ ॥

**जूरः क्रुधेः ॥ ७२ ॥**

कुप क्रुध रुष इति त्रयः क्रुध्यतिः, तस्य जूर इत्यादेशो भवति। जूरइ। कुज्झइ ॥ ७२ ॥

**विसूरश्च खिदेः ॥ ७३ ॥**

खिद दैन्ये इत्यस्य धातोः विसूर इत्यादेशः, चकारात् जूरश्च वा भवति। विसूरइ। जूरइ। खिज्जइ ॥ ७३ ॥

**तड्डवविरल्लतडतड्डास्तनेः ॥ ७४ ॥**

तनु विस्तारे इत्यस्य धातोः तड्डव विरल्ल तड तड्ड इति चत्वार आदेशा भवन्ति तु। तड्डवइ। विरल्लइ। तडइ। तड्डइ। तणइ ॥ ७४ ॥

---

68. B कहइ; KS कड्डइ; M कत्थइ for कढइ. 69. MT °सीस°; S °सिर° for °सास°. MT °जंप° for °जप्प°. MT °विसुण° for °पिसुण°. T °उप्पालाः for °उव्वालाः in the Sūtra, Com. and illustrations. 70. T णिब्बर. for णिव्वरः in the Sūtra, Com. and illustrations. 72. M जूरः कुपः for the Sūtra. M खुज्जइ for कुज्झइ. 74. M om. °तड° in the Sūtra.

**निरः पद्यतेर्वलः ॥ ७५ ॥**

निर्पूर्वस्य पद गतौ इत्यस्य धातोः वल इत्यादेशो भवति वा । णिव्व-लइ । णिवज्जइ ॥ ७५ ॥

**संतपां झङ्खः ॥ ७६ ॥**

संपूर्वस्य तप्यतेः झङ्ख इत्यादेशो भवति तु । बहुवचनात् निःश्व-सितिविलपत्युपालभतीनां च । झङ्खइ, संतप्यते, निःश्वसिति, विलपति उपालभते वा ।। पक्षे संतवइ । णीससइ । विलवइ । उवालहइ ॥ ७६ ॥

**ओअग्गसमाणौ व्यापिसमाप्योः ॥ ७७ ॥**

व्याप्नोति समाप्नोति इत्यनयोः यथासंख्यम् ओअग्ग समाण इत्यादेशौ तु भवतः । ओअग्गइ । समाणइ ॥ पक्षे । वावेइ व्याप्नोति । समावेइ समाप्नोति ॥ ७७ ॥

**णिरवो बुभुक्ष्याक्षिप्योः ॥ ७८ ॥**

बुभुक्षेराचारे क्विबन्तस्य आङ्पूर्वस्य च क्षिपतेः णिरव इत्यादेशो भवति तु । णिरवइ, बुभुक्षते आक्षिपति वा ॥ बुभुक्खइ । अक्खिवइ ॥ ७८ ॥

**क्षिपिरड्डक्खपरिहुलघत्तछुहफेल्लणोल्लसोल्लगल्लत्थान् ॥ ७९ ॥**

क्षिप प्रेरणे इत्ययं धातुः अड्डक्ख परि हुल घत्त छुह फेल्ल णोल्ल सोल्ल गल्लत्थ इति नवादेशानापद्यते तु । अड्डक्खइ । परिइ । हुलइ । घत्तइ । छुहइ । फेल्लइ । णोल्लइ । सोल्लइ । गल्लत्थइ ॥ पक्षे । खिवइ ॥ ७९ ॥

**उत्क्षिपिरुत्थग्घोसिक्कहक्खुवाल्लत्थगुलुगुञ्छाब्भुत्तान् ॥ ८० ॥**

उत्क्षिपतिः उत्थग्घ उसिक्क हक्खुव अल्लत्थ गुलुगुञ्छ अब्भुत्त इति षडादेशानापद्यते तु । उत्थग्घइ । उसिक्कइ । हक्खुवइ । अल्लत्थइ । गुलु-गुञ्छइ । अब्भुत्तइ ।। पक्षे । उक्खिवइ ॥ ८० ॥

---

76. S झक्कः; T झक्खः for झखः in the Sūtra. S झंक in Com. S झक्कइ for झंखइ. 78. KS णिवरो, S णिलवो; T णीरवो for णिरवो in the Sūtra, Com. and illustrations. M om. आचारे क्विबन्तस्य. 79. T °गलत्थान् in the Sūtra, Com. and illustrations.

**वेपेराअब्बाअज्झौ ॥ ८१ ॥**

टुवेपृ कम्पने इत्यस्य धातोः आअब्ब आअज्झ इत्यादेशौ तु भवतः । आअब्बइ । आअज्झइ । वेवइ ॥ ८१ ॥

**विरणडौ गुपेः ॥ ८२ ॥**

गुप व्याकुलत्वे इत्यस्य धातोः विर णड इत्यादेशौ तु भवतः । विरइ । णडइ । गुप्पइ ॥ ८२ ॥

**चच्चारवेलवावुपालभेः ॥ ८३ ॥**

उपाङ्पूर्वस्य डुलभष् प्राप्तौ इत्यस्य धातोः चच्चार वेलव इत्यादेशौ तु भवतः । चच्चारइ । वेलवइ । उवालम्भइ ॥ ८३ ॥

**खउरपड्डुहौ क्षुभेः ॥ ८४ ॥**

क्षुभ्यतेः खउर पड्डुह इत्यादेशौ तु भवतः । खउरइ । पड्डुहइ । खुब्भइ ॥ ८४ ॥

**प्रदीपेः संधुक्काब्बुत्ततेअवसंधुमाः ॥ ८५ ॥**

प्रपूर्वस्य दीप्यतेः संधुक्क अब्बुत्त तेअव संधुम इति चत्वार आदेशा भवन्ति तु । संधुक्कइ । अब्बुत्तइ । तेअवइ । संधुमइ ॥ पक्षे । पलीवइ॥८५॥

**अल्लिअ उपसर्पेः ॥ ८६ ॥**

उपपूर्वस्य सृप गतौ इत्यस्य धातोः अल्लिअ इत्यादेशो भवति तु । अल्लिअइ । उवसप्पइ ॥ ८६ ॥

**कमवसलिसलोट्टाः स्वपेः ॥ ८७ ॥**

ञिष्वप् शये इत्यस्य धातोः कमवस लिस लोट्ट इति त्रय आदेशा भवन्ति तु । कमवसइ । लिसइ । लोट्टइ ॥ पक्षे । सुवइ । सोवइ ॥ ८७ ॥

---

81. MT आअम्ब° in the Sūtra, Com. and illustrations. 83. M चच्चारपेलवमुपालभेः for the Sūtra. S च्चचार°; T पच्चार° in the Sūtra, Com. and illustrations. 84. M °पत्थुहौ for °पड्डुहौ in the Sūtra. 85. MS °अब्भुत्त°; T °अब्भुक्क° for °अब्बुत्त° in the Sūtra. MST °संदुमाः for संधुमाः in the Sūtra, Com. and illustrations. 86. S अल्लिक in the Sūtra, Com. and illustrations. MT सृप्लृ for सृप.

**बडबडो विलपेः ॥ ८८ ॥**

लप व्यक्ताया वाचि इत्यस्य धातोर्विपूर्वस्य बडबड इत्यादेशो भवति तु । बडबडइ । विलवइ ॥ 'संतपा झङ्खः' [ ३·१·७६ ] इति विनिःश्वसित्यादीना बहुवचनग्रहणात् झङ्खइ ॥ ८८ ॥

**रंभिराङो रम्भडवौ ॥ ८९ ॥**

आङ. परो रभ राभस्ये इत्ययं धातुः रम्भ डव इत्यादेशावापद्यते तु । आरम्भइ । आडवइ । आरहइ ॥ ८९ ॥

**भाराक्रान्ते नमेर्निसुडः ॥ ९० ॥**

णमु प्रह्वत्वे शब्दे इत्यस्य धातोर्भाराक्रान्ते कर्तरि निसुड इत्यादेशो भवति तु । निसुडइ, भाराक्रान्तो नमतीत्यर्थः ॥ ९० ॥

**उब्भाववेल्लणिसरकोड्डुमसक्खुड्डखेड्डमोट्टाअकिलिकिञ्चा रमतेः॥९१॥**

रमु क्रीडायाम् इत्यस्य धातोः उब्भाव वेल्ल णिसर कोड्डुम सक्खुड्ड खेड्ड मोट्टाअ किलिकिञ्च इत्यष्टादेशा भवन्ति तु । उब्भावइ । वेल्लइ । णिसरइ । कोड्डुमइ । सक्खुड्डइ । खेड्डइ । मोट्टाअइ । किलिकिञ्चइ ॥ पक्षे । रमइ ॥ ९१ ॥

**पडिसापरिसामौ शमेः ॥ ९२ ॥**

शमु उपशमे इत्यस्य धातोः पडिसा परिसाम इत्यादेशौ वा भवतः । पडिसाइ । परिसामइ । समइ ॥ ९२ ॥

**लुभेः संभावः ॥ ९३ ॥**

लुभ गार्ध्ये इत्यस्य धातोः संभाव इत्यादेशो भवति तु । संभावइ । लुब्भइ ॥ ९३ ॥

---

88. KMS चडचडो, T वडवड्डो for बडबडो in the Sūtra. KMS चडचडइ for बडबडइ. T झघइ for झंखइ. 89. T रंभढवौ for रम्भडवौ in the Sūtra, Com. and illustrations. K om. आरहइ. 90. MT निसुढ· in the Sūtra, Com. and illustrations. 91. M णीसर°, for °णिसर; M °सखुड° for सक्खुड्ड° in the Sūtra, Com. and illustrations. 93. K लुब्भावइ for लुब्भइ.

**आक्रामिरोहावोत्थारच्छुन्दान् ॥ ९४ ॥**

आङ्पूर्वस्य क्रमु पादविक्षेपे इत्ययं धातुः ओहाव उत्थार छुन्द इत्यादेशान्वीनापद्यते । ओहावइ । उत्थारइ । छुन्दइ । अक्कमइ ॥ ९४ ॥

**विश्रमेर्णिप्पा ॥ ९५ ॥**

श्रमु तपसि खेदे च इत्यस्य धातोर्विपूर्वस्य णिप्पा इत्यादेशो भवति तु । णिप्पाइ । वीसमइ ॥ ९५ ॥

**ढुण्ढुल्लढुमडण्डल्लभमाडभम्मभमुडतलअण्टझण्टगुमटिरिटिल्लि-परिपरघमचक्कमभमडघसझम्पडुसा भ्रमेः ॥ ९६ ॥**

भ्रमु अनवस्थाने इत्यस्य ढुण्ढुल्ल ढुम डण्डल्ल भमाड भम्म भमुड तलअण्ट झण्ट गुम टिरिटिल्लि परि पर घम चक्कम भमड घस झम्प डुस इत्यष्टादशादेशा वा भवन्ति । ढुण्ढुल्लइ । ढुमइ । डण्डल्लइ । भमाडइ । भम्मइ । भमुडइ । तलअण्टइ । झण्टइ । गुमइ । टिरिटिल्लइ । परिइ । परइ । घमइ । चक्कमइ । भमडइ । घसइ । झम्पइ । डुसइ ॥ पक्षे । भमइ ॥ ९६ ॥

**गमिरणुवज्जावज्जसाक्कुसोक्कुसाइच्छाईअवहरावसेहवडअवरिअल-वरिअल्लवोल्लणिरिणासवच्छड्डणिणणिम्महपच्छन्दणिलुक्करम्भणि-णिवहान् ॥ ९७ ॥**

गम्लृ गतौ इत्ययं धातुः अणुवज्ज अवज्जस अक्कुस उक्कुस अइच्छ अई अवहर अवसेह वडअ वरिअल वरिअल्ल वोल्ल णिरिणास वच्छड्ड णिण णिम्मह पच्छन्द णिलुक्क रम्भ णि णिवह इत्येकविंशतिमादेशानापद्यते वा । अणु-वज्जइ । अवज्जसइ । अक्कुसइ । उक्कुसइ । अइच्छइ । अईइ । अवहरइ । अवसेहइ । वडअइ । वरिअलइ । वरिअल्लइ । वोल्लइ । णिरिणासइ । वच्छड्डइ । णिणइ । णिम्मइइ । पच्छन्दइ । णिलुक्कइ । रंहइ । णिइ । णिवहइ ॥ पक्षे । गच्छइ ॥ हम्मइ, णिहम्मइ, आहम्मइ इत्यादि तु हम्म गतौ इत्यस्य भविष्यति ॥ ९७ ॥

---

94. M °छदान् for °च्छुन्दान् in the Sūtra, Com. and illustrations. T पदविक्षेपे for पाद°. 96. M ढुंढुल्ल°; S ढुंडुल्ल°. M °भुम° for °भम्म°. B °चक्कमु° for °चक्कम° in the Sūtra, Com. and illustrations. After इत्यस्य K adds धातोः. 97. M °वढव°, T °पडअ° for °वडव°. KM °वच्चड्ड°; S °वंचंड° for °वच्छड्ड°. K °णिल्लक्क° for °णिलुक्क°. M °रह° for °रम्भ°. M °णी° for °णि° in the Sūtra, Com. and illustrations.

**प्रत्यागमागमाभ्यागमां पल्लोट्टाहिपच्चुओम्मच्छाः ॥ ९८ ॥**

प्रत्यागमेः आगमेः अभ्यागमेश्च यथासंख्यं पल्लोट्ट अहिपच्चुअ उम्मच्छ इत्यादेशा भवन्ति तु । पल्लोट्टइ, पच्चागमइ, प्रत्यागच्छति । अहिपच्चुअइ, आअच्छइ, आगच्छति । उम्मच्छइ, अब्भागच्छइ, अभ्यागच्छति ॥ ९८ ॥

**रिहरिग्गौ प्रविशेः ॥ ९९ ॥**

प्रविशतेः रिह रिग्ग इत्यादेशौ तु भवतः । रिहइ । रिग्गइ । पविसइ ॥ ९९ ॥

**संगमोऽब्भिडः ॥ १०० ॥**

संगच्छतेः अब्भिड इत्यादेशो भवति तु । अब्भिडइ । संगच्छइ ॥ १०० ॥

**डिप्पणिड्डुहौ विगलेः ॥ १०१ ॥**

विपूर्वस्य गलतेः डिप्प णिड्डुह इत्यादेशौ तु भवतः । डिप्पइ । णिड्डुहइ । विगलइ ॥ १०१ ॥

**णिवहणिरिणासणिरिणिज्जरोञ्चचड्डाः पिषेः ॥ १०२ ॥**

पिष्लृ संचूर्णने इत्यस्य धातोः णिवह णिरिणास णिरिणिज्ज रोञ्च चड्ड इति पञ्चादेशा भवन्ति तु । णिवहइ । णिरिणासइ । णिरिणिज्जइ । रोञ्चइ । चड्डइ ॥ पक्षे । पिसइ ॥ १०२ ॥

**वलेर्वम्फः ॥ १०३ ॥**

वल्तेर्वम्फ इत्यादेशो भवति तु । वम्फइ । वलइ ॥ १०३ ॥

---

98. M °अहिपच्छअ°, T °अहिवच्चुअ° for °अहिपच्चुअ°. S °ओअच्छाः; T °ओमच्चाः for उम्मच्छाः in the Sūtra, Com. and illustrations. KT आगच्छइ for आअच्छइ 99. M रिहरिंगौ, T रिअरिजौ for रिहरिग्गौ in the Sutra, Com. and illustrations. 100. MT संगमेरब्भिडः for the Sūtra. B अव्विडः for अब्भिड. in the Sūtra, Com. and illustrations. 101. M णिप्पणिछुहौ T यिप्पणिट्ठुहौ; for डिप्पणिड्डुहौ in the Sūtra, Com. and illustrations. 102. M णीवह° for णिवह° in the Sūtra. KS °लोंच° for °रोञ्च° in the Sūtra.

**भ्रंशेः पिड्डपिट्टछुक्कछुल्लपुट्टपुडाः ॥ १०४ ॥**

भ्रंशेरित्यस्य धातोः पिड्ड पिट्ट छुक्क छुल्ल पुट्ट पुड इत्येते षडादेशा भवन्ति तु । पिड्डइ । पिट्टइ । छुक्कइ । छुल्लइ । पुट्टइ । पुडइ ॥ पक्षे भंसइ ॥ १०४ ॥

**भषेर्बुक्कः ॥ १०५ ॥**

भषतेः बुक्क इत्यादेशो भवति तु । बुक्कइ । भसइ ॥ १०५ ॥

**पुरग्घवाग्घोडाहिरेमाग्गुमाद्धुमाः ॥ १०६ ॥**

पॄ पालनपूरणयोः इत्यस्य धातोः अग्घव अग्घोड अहिरेम अग्गुम अद्धुम इति पञ्चादेशा भवन्ति तु । अग्घवइ । अग्घोडइ । अहिरेमइ । अग्गुमइ । अद्धुमइ ॥ पक्षे । पूरइ ॥ १०६ ॥

**आहाहिलंघवच्चाहिलक्खमहसिहचिल्लुम्पचम्पाः कांक्षेः ॥ १०७ ॥**

काक्षतेः आह अहिलंघ वच्च अहिलक्ख मह सिह चिल्लुम्प चम्प इत्यष्टादेशा वा भवन्ति । आहइ । अहिलंघइ । वच्चइ । अहिलक्खइ । महइ । सिहइ । चिल्लुम्पइ । चम्पइ ॥ पक्षे । कंखइ ॥ १०७ ॥

**नशिरवहरावसेहणिवहपडिसासेहणिरिणासान् ॥ १०८ ॥**

नश्यतिः अवहर अवसेह णिवह पडिसा सेह णिरिणास इति षडादेशानापद्यते वा । अवहरइ । अवसेहइ । णिवहइ । पडिसाइ । सेहइ । णिरिणासइ ॥ पक्षे । णासइ ॥ १०८ ॥

**साअड्ढाणच्छकड्ढाच्छाअञ्छाणञ्छाः कृषेः ॥ १०९ ॥**

कृष विलेखने इत्यस्य धातोः साअड्ढ अणच्छ कड्ढ अच्छ आअञ्छ आणञ्छ इति षडादेशा वा भवन्ति । साअड्ढइ । अणच्छइ । कड्ढइ । अच्छइ । आअञ्छइ । आणञ्छइ ॥ पक्षे करिसइ ॥ १०९ ॥

---

104. K भ्रमेः for भ्रंशेः. Bp KM °चुक्कचुल्ल° for ° छुक्कछुल्ल°. Bp K °घट्टघाडाः; M फुंटफुडाः; T °पट्टपुडाः for °पुट्टपुडाः in the Sūtra, Com. and illustrations. K भ्रंशु पतने इत्यस्य for भ्रंशेः. 105. S भुक्क for बुक्कः in the Sūtra, T हर्षतेः for भषतेः. 107. T °विलुंप° for °चिल्लुम्प°. MS °चंफाः for °चम्पाः in the Sūtra, Com. and illustrations. 108. KST पक्षे नस्सइ for नासइ. 109. K °याअठ्ठ° for °आअञ्छ° in the Sūtra. and Com. K आअट्ठइ for आअञ्छइ.

**असावक्खोडः ॥ ११० ॥**

असिविषयस्य कर्षतेः अक्खोड इत्यादेशो वा भवति । अक्खोडइ, असिं कोशात्कर्षति ॥ ११० ॥

**उल्लसेरूसलोसुम्भारोअणिल्लसगुञ्जोल्लपुलआआः ॥ १११ ॥**

उत्पूर्वस्य लष कान्तौ इत्यस्य धातोः ऊसल ऊसुम्भ आरोअ णिल्लस गुञ्जोल्ल पुलआअ इति षडादेशा वा भवन्ति । ऊसलइ । ऊसुम्भइ । आरोअइ । णिल्लसइ । गुञ्जोल्लइ ॥ ह्रस्वे । गुञ्जुल्लइ । पुलआअइ ॥ पक्षे उल्लसइ ॥ १११ ॥

**संदिशोऽप्पाहः ॥ ११२ ॥**

संपूर्वस्य दिश अतिसर्जने इत्यस्य धातोः अप्पाह इत्यादेशो वा भवति । अप्पाहइ । संदिसइ ॥ ११२ ॥

**ग्रसेर्घिसः ॥ ११३ ॥**

ग्रस अदने इत्यस्य धातोः घिस इत्यादेशो भवति । घिसइ । गसइ ॥ ११३ ॥

**भासेर्भिसः ॥ ११४ ॥**

भासृ दीप्तौ इत्यस्य धातोः भिस इत्यादेशो भवति । भिसइ । भासइ ॥ ११४ ॥

**प्रतीक्षेर्विहिरविरमालसामआः ॥ ११५ ॥**

प्रतिपूर्वस्य ईक्ष दर्शने इत्यस्य धातोः विहिर विरमाल सामअ इति त्रय आदेशा भवन्ति तु । विहिरइ । विरमालइ । सामअइ ॥ पक्षे । पडिक्खइ ॥ ११५ ॥

**स्रंसेर्ल्हसडिम्भौ ॥ ११६ ॥**

स्रंसु अवस्रंसने इत्यस्य धातोः ल्हस डिम्भ इत्यादेशौ तु भवतः । ल्हसइ । परिल्हसइ । परिल्हसणं । डिम्भइ । ससइ ॥ ११६ ॥

---

111. T °आरोघ° for आरोअ°. S °घलआआः for °पुलआआः in the Sūtra, Com. and illustrations. BT गुजल्लइ for गुञ्जुल्लइ. 113. MS ग्रसु for ग्रस 114. Bp भासुर्बिसः for the Sūtra. 115. S विहर°; T विहीर° for विहिर° in the Sūtra.

**मृक्षेश्चोप्पडः ॥ ११७ ॥**

मृक्षतेः चोप्पड इत्यादेशस्तु भवति । चोप्पडइ । मक्खइ ॥ ११७ ॥

**विसट्टो दलेः ॥ ११८ ॥**

दलतेः विसट्ट इत्यादेशस्तु भवति । विसट्टइ । दलइ ॥ ११८ ॥

**त्रसेर्वज्जडरौ ॥ ११९ ॥**

त्रसतेः वज्ज डर इत्यादेशौ तु भवतः । वज्जइ । डरइ । तसइ ॥११९॥

**वोज्जो वीजेश्च ॥ १२० ॥**

वीज व्यजने इत्यस्य धातोः चकारात् त्रसेश्च वोज्ज इत्यादेशो भवति तु । वोज्जइ ॥ पक्षे । वीजइ । तसइ ॥ १२० ॥

**गवेषेर्घत्तगमेसडुण्डुल्लडण्डोलाः ॥ १२१ ॥**

गवेषेः घत्त गमेस डुण्डुल्ल डण्डोल इति चत्वार आदेशा भवन्ति तु । घत्तइ । गमेसइ । डुण्डुल्लइ । डण्डोलइ ॥ पक्षे । गवेसइ ॥ १२१ ॥

**तक्षेश्चञ्छरम्परम्फाः ॥ १२२ ॥**

तक्षू तनूकरणे इत्यस्य धातोः चञ्छ रम्प रम्फ इति त्रय आदेशा भवन्ति तु । चञ्छइ । रम्पइ । रम्फइ ॥ स्पृहादिपाठात् छत्वे च तच्छइ ॥ तक्खइ॥१२२॥

**हसेर्गुञ्जः ॥ १२३ ॥**

हसतेः गुञ्ज इत्यादेशो भवति तु । गुञ्जइ । हसइ ॥ १२३ ॥

**दहिरहिऊलालुक्खौ ॥ १२४ ॥**

दह भस्मीकरणे इत्ययम् अहिऊल आलुक्ख इत्यादेशावाप्नोति । अहिऊलइ । आलुक्खइ । दहइ ॥ १२४ ॥

---

117. B मृक्षेश्चोव्वडः; K मुहेश्चोव्वडः; S मुच्चेश्चोव्वडः; for the Sūtra. K मुह्यतेः for मृक्षतेः. BKS चोव्वडइ for चोप्पडइ. K मुज्झइ for मक्खइ. 118. T विदलेः for दलतेः. KS इत्यादेशो भवति तु for इत्यादेशस्तु भवति. 120 S वज्जो विजश्च; T वोज्जो व्यजेश्च for the Sūtra. 121. M °ढंढोल्लाः; T °ढिंडोला in the Sūtra, Com. and illustrations. 122. M °रंछाः for °रम्फाः in the Sūtra. BK चच्छइ. for तच्छइ.124. S °आलुंमौ in the Sūtra,अलुल्ल in Com.,but आलुक्खइ as illustrations. K डहइ for दहइ.

**विकसेः कोआसवोसग्गौ ॥ १२५ ॥**

विकसतेः कोआस वोसग्ग इत्यादेशौ तु भवतः। कोआसइ । वोसग्गइ । विअसइ ॥ १२५ ॥

**श्लिषोऽवआससामग्गपरिअन्ताः ॥ १२६ ॥**

श्लिष आलिङ्गने इत्यस्य धातोः अवआस सामग्ग परिअन्त इति त्रय आदेशा भवन्ति तु । अवआसइ । सामग्गइ । परिअन्तइ । सिलिसइ ॥१२६॥

**जुगुप्सतेर्दुगुञ्छझूणदुगुच्छाः ॥ १२७ ॥**

जुगुप्सतेः दुगुञ्छ झूण दुगुच्छ इति त्रय आदेशा भवन्ति तु । दुगुञ्छइ । झूणइ । दुगुच्छइ । जुउच्छइ ॥ १२७ ॥

**वलग्गचडमारुहेः ॥ १२८ ॥**

रुह बीजजन्मनि प्रादुर्भावे च इत्यस्य धातोः आङ्पूर्वस्य वलग्ग चड इत्यादेशौ तु भवतः । वलग्गइ । चडइ । आरुहइ ॥ १२८ ॥

**हुल्लो लक्ष्यात् स्खलेः ॥ १२९ ॥**

लक्ष्यविषयस्य स्खलतेः हुल्ल इत्यादेशो वा भवति । हुल्लइ । लक्ष्यात् स्खलतीत्यर्थः ॥ १२९ ॥

**गाहोऽवाद्वाहः ॥ १३० ॥**

अवात् परस्य गाहू विलोडने इत्यस्य धातोः वाह इत्यादेशो भवति तु । ओवाहइ । ओगाहइ ॥ १३० ॥

**गुम्मगुम्मडौ मुहेः ॥ १३१ ॥**

मुह वैचित्ये इत्यस्य धातोः गुम्म गुम्मड इत्यादेशौ तु भवतः। गुम्मइ। गुम्मडइ । मुज्झइ ॥ १३१ ॥

---

125. T °वोसट्टौ for °वोसग्गौ in the Sūtra. T वोसट्टइ for वोसग्गइ. 127. MT दुगुच्छझुणदुगुंछा जुगुप्सेः for the Sūtra. S °झाण° for °झूग° in the Sūtra, Com. and illustrations. 128, S °जड° for °चड° in the Sūtra, Com. and illustrations. KMS om. प्रादुर्भावे च. 129. KM स्खलतेः for स्खलेः in the Sūtra and Com. 130. MT om. ओगाहइ.

**अपुण्णगाः क्तेन ॥ १३२ ॥**

अपुण्णादयः शब्दाः क्तप्रत्ययेन सह निपात्यन्ते । (१) अ पु ण्णं आक्रान्तम् । (२) उ म्म च्छं असंबद्धं क्रोधेन भङ्गया च यद्भणितम् । (३) उ ल्लु क्को (४) ओ स ण्णो (५) मु रु ओ त्रुटितः । (६) प ह ट्टं अविरतदृष्टम् । (७) गु ज्ज णि अं (८) पे ज्ज लि अं संघटितम् । (९) स उ लि ओ (१०) ग ल त्थ लि ओ (११) उ रु सो ल्लो प्रेरितः । (१२) उ क्खि ण्णं अवकीर्णम् । (१३) वो स ट्टो (१४) वि हि मि हि ओ विकसितः । (१५) उ द्ध रि अं अर्दितः । (१६) क मि ओ उपसर्पितः । (१७) क ड त रि अं छिन्नं छिद्रितं च । (१८) सु ढि ओ श्रान्तः । (१९) प रि हा इ अं परिक्षीणम् । (२०) णि क्क ज्जो (२१) अ णि क ज्जो (२२) उ क्क ग्गो (२३) त ड ह डि ओ अनवस्थित ।

---

132. (1) HD. (अप्फुण्णं-पूर्णम् ) 1·20, HG. 4. 258. T अप्पणं. (2) HD.1.125. BC अम्मच्छं. (3) HD.1.92. B उल्लुक्को, C उल्लोक. (4) HD. 1.156 B आसण्णो. (5) HD (मुरिअ) 6.135. Bp KS गुरुओ, C मरिओ; M मुरओ. (6) HD. (पहट्टो-हृतः ) 6.9. M पहत्तं; T पट्ट. (7) HD. (गुजेल्लिअ ) 2 92. BC गुजलिअं. (8) HD. (पेज्जल प्रमाणं) 6.57. KS पड्डलिअं; M पंडलिअं, T पघलिअ (9) HD. (सउलिअ) 8.12. B सउलिओ, C पसल्लिओ. (10) HD. 2.87. B गल्लडिलिओ, C गळद्धओ, K गलंडलिओ; S गलद्दालिओ; T गलइत्थिलिओ. After this K adds उरुम्मिले , C ऊरुमल्लो (11) HD.(°ल्ल) 1.108. (12) HD. 1.130. B उक्खिणं, C उक्खणो. (13) HD. (°ट्ट) 7.81. BC ओसट्टो; K om; M वं सट्टो T वोसट्टो. (14) HD. (विहसिव्विअ) 7.61. K om. (15) HD. (उद्दरिअं) 1.100. K उद्दवओ; MS उत्थविओ, $T_1$ उद्धवीअं; $T_2$ उद्धविअं. After this KMS add अधित्तं. (16) HD. 2 3. K कविओ, S किमिओ. (17) HD. 2.20. BK कडत्तरिअं; C कडद्दरिअं, T कसत्तरिअं. (18) HD. 8.36. B सुदिओ, KM S सुडिओ; T सुथिओ. (19) HD. (परिहाओ) 6.25. BT परहाइअं. After this KMS add परिहणं (cf HD. 6.21). (20) HD. 4.33. S णिकजो; T णिकज्जो. (21) HD. 4.33 S अणेकंजो; T अणेअज्जो. (22) HD. ? B मुक्कज्जो; K अच्चग्गो; M अच्चेगो; S अच्चंगो; T उच्चग्गो. (23) HD. (तडफडिअं) 5.9. KS चडहडिओ; T तहसिओ. Bp अनुत्थितः, S अनुस्थितः for अनवस्थितः.

(२४) उद्धओ श्रान्तः । (२५) उब्भग्गो मुण्डितः । (२६) उच्चुल्लो उद्विग्नः । (२७) उच्छूरणं उच्छिष्टम् । (२८) उव्विलं चकितं क्लान्तं वा । (२९) पहोइअं (३०) अकासिअं पर्याप्तम् । (३१) णालं (३२) गोरिहिअं । (३३) हित्थो (३४) डड्ढो त्रस्तः । (३५) उप्पित्थो क्रुद्धश्च । (३६) णिविड्डो सुप्तोत्थितः । (३७) ओमिसं अप्रवृत्तम् । (३८) उग्घक्कं प्रलपितम् । (३९) उप्पिअं ह्रतं रोषितं विमुक्तं च । (४०) ओहरणं (४१) जिग्घिअं (४२) ओअग्घिअं आघ्रातम् । (४३) ऊसविअं उद्भ्रान्तम् । (४४) आहित्थो रुद्धो गलितश्च । (४५) णिसुद्धो निपातितः । (४६) णिव्वूठो । (४७) उम्मण्डो उद्धतः । (४८) उल्लुण्डिअं

(24) HD. (उद्धाओ-श्रान्त) 1.124. S अघओ. BT शान्तः for श्रान्तः. (25) HD. (उब्भग्गो गुण्ठितः) 1.95. BK उव्वंगो, C पुव्वगो, S उब्भंगो. T मण्डित: for मुण्डित. (26) HD. (उच्चुल्लं) 1.127. Bp K उच्छुग्गो; C उच्चल्लो, M उच्छल्लो; S उडुग्गो. (27) HD. (उद्धरणं) 1.106. BT उच्चुरणं, M उच्छुरणं. (28) HD. (उप्पित्थ ?) 1.129. C उव्विडं; M उव्विल्लं, T उप्पिणं. (29) HD. 6.26. B पओहिअं, C वहइअं; M पहोडअं (30) HD. (अकासि) 1.8. B अकारिअ, C आकासिअं; KS अरासिअं, M परासिअ. (31) C णाली, T णिल. (32) BG गोरडितं; M गोरहित; S गोरिहितं, T गोट्टित. (33) HD. 8.67. BT हिड्डो; C हिद्धो. (34) BG डट्ठो, M ढड्ढो, S डंडो, T ढट्ठो. (35) HD. 1.129. BK उव्विड्डो; C उंव्विवव्वो, M उव्विथो, S उव्विरथो. (36) HD. (णिविद्धो) 4 48. B णिविट्ठो, Bp णिव्विडो. (37) C ओमसो, S अमिस; T ओमिसः, (38) C उव्वीक्को, S उग्घंक, T उप्पुत्तं. (39) HD. (उप्पित्थ ?) 1.129. KS उग्घिअं. (40) HD. 1.174. MT ओहरसं. S om. (41) HD. 3.46. BKS णिघअं; C णिमिअं; T दीघिअ. (42) HD. (ओअग्गिअं) 1.172. BC ओअघिअं; M om, S ओअंघिअं; T ओअविअं. (43) HD. 1.143. (44) HD. 1.76. BK आहिद्धो. (45) HD. 4.36. HG. 4.258. (निसुद्दो), M निसुधो, S निसुत्थो; T रिसुडो. (46) HD. 4.33. BT णिच्चूडो; C णिच्चुड्डो; S णिउंडो. (47) HD. 1.124. BK उम्मडो. C उम्मड्डो; M उम्मढो. (48) B उड्डडिअं; K उल्लुविड्डिअ; M उल्लंडिअं.

(४९) जू सि अं क्षिप्तम् । (५०) णि ज्जो । (५१) लव ओ (५२) लिह ओ (५३) लु क्को सुप्तः । (५४) उ ज्ज णि अं वक्रितं निम्नीकृतं च । (५५) ऊ ढं त्यक्तम् । (५६) उ ज्ज रि अं शुष्कं निम्नीकृतं च । (५७) फु ड्डं स्पृष्टम् । (५८) डि ढ ओ जलान्त.पातितः। (५९) ओ स रि ओ आकीर्णः अक्षिनिकोचात्संकुचितश्च । (६०) गु लि अं मथितम् । (६१) उ म्म रि अं (६२) गु त्थि अ उन्मूलितम् । (६३) उ ड्डा-हि अं (६४) प रि च्चू डं (६५) उ ग्गा हि अं उत्क्षिप्तम् । (६६) हा सि अं दत्तम् । (६७) हे सि अं (६८) दुं दु मि अं रासितम् । (६९) चि त्त वि ओ परितोषितः। (७०) प ह्लो ट्ट (७१) झ सि अ (७२) प ल्ह त्थं पर्यस्तम् । (७३) प म्हु ट्ठो प्रमुषितः प्रमृष्टश्च । (७४) ओ ले ह डो प्रवृद्धः अन्यसक्तश्च । (७५) ओ ट्ट अं (७६) ओ आ मि अं अभिभूतम् । (७७) रु मि ल्लं आभिलषितम् ।

---

(49) B जूसअं; K सेसिअं; MS रोसिअ, T झोसिअ. (50) HD. 4.25. S णिच्चो. (51) C लवबो, M लओ. (52) HD. (लिहिओ) 7.28. B णिहओ; C णिहवो; KM लिगओ, S om. (53) HD. (लुको) 7.23. M लक्को. After this ST add लुअ. (54) HD. 1.111. BK उज्झाणिअ. After this T adds उणिअ. (55) C जडं; M लुअ. (56) HD. 1.133 B उज्झरिअं, C उज्झिअं. (57) B पुड्डं; C घड, S घड्ड, T पुस्सं. (58) HD. (ढिंढयं) 4.15. C डिंडवो; M दिढ. (59) HD. 1.171. C ओसडिओ. (60) M गुरुअ; T मीलित for मथितम्. (61) HD, 1.100. T, उम्मरीअ. (62) M गुठिअं, S गुंडिअं; T गुंडअं. (63) B उडाहिअं; M उड्ढाहिअं; S उंडाहिअ. (64) C परिञ्चिअं;K वरुच्छड; M वरुच्छघं; S वरुच्छड, T परच्छडं. (65) HD. 1.137. C उगाहिअं, उडाहिअ; उदाहिअं KS उम्माहिअं. (66) B आसिअं; T हसिअं. (67) Sk ह्रेषितम्. KMS om. (68) HD. 5.45. (69) C चित्तविअओ; K रित्तविओ; S रितविओ; T वित्तविओ, (70) HD. 6.35. C परोट्ट. (71) HD. 3.62. B झुसिअं; C झपिअं. (72) B पल्लत्थं; C पल्तित्तं. (73) C अम्हत्तो M वल्हुड्ढो; S पमुंडो. After प्रमृष्टश्च KMST add गअं आघूर्णितम्. (74) HD. 1.172. B आवेहडो; C ओवेवओ. (75) B ओट्टलं; Bp ओजल; C ओअम्मओ; S ओंढअं; T ओजअं. (76) HD. (ओहाइओ) 1.156. C ओहामिओ; S ओआहअ. (77) C रंगिल्ल; S रुंमिल्ल; T जहिल्लं.

(७८) प च्चु ड रि अं प्रत्युद्गतम् । (७९) अ क्क न्तो प्रवृद्धः । (८०) ओ अ ल्लो छन्नः । (८१) क र मो क्षीगः । (८२) क डो उपरतः क्षीणश्च । (८३) पे क्कि अं वृपरटितम् । (८४) अ ङ्कि अं आलिङ्गितम् । (८५) अ वि अं उक्तम् । (८६) उ द्धु सि अं (८७) उ ल्लु सि अं (८८) चि मि णं (८९) उ लु कु सि अं (९०) ऊ स लि अं रोमाञ्चितम् । (९१) अ स ङ्गि ओ सक्तः । (९२) आ रे इ अं मुकुलितं मुक्तं भ्रान्तं पुलकितं च । (९३) उ च्छ-ण्डि अं शरादिव्यथितम् अपहृतं च । (९४) च ण्टि अं छन्नम् । (९५) ऊ स सि अं (९६) ऊ स अं उपधानीकृतम् । (९७) आ वि अं प्रोतम् । (९८) अ व ह ट्ठो दर्पितः । (९९) आ र द्धो वृद्धिं गतः गृहायातश्च । (१००) घु त्ति अ अं (१०१) घु सि णि अं अन्विष्टम् । (१०२) घु ग्घु स्सि अं अशङ्कं भणितम् ।

(78) HD. उच्चुलउलिअ ? 1.121. HD. notes उप्पिलवेलिअं (as from Tr); B उच्चुडरिअं, C वच्छुद्धळिओ, K पट्टरिअं; M पप्पुद्धरिअं; T पच्चुडरीअं. (79) HD. (अक्कन्त) 1.9. S अकतो; T अकत्तो. (80) HD. ( =पर्यस्तः ) 1.165. C जअल्लो; M ओअळो, S ओअल्लो. (81) HD. 2.6. (82) HD. 2.5. BC कथो; T कन्धो. (83) KS पक्खिअं; M फोकिअं, T फॅकिअ. (84) HD. 1.11. (85) HD. 1.10. MS अपिअ. (86) B उडुसिअं;C उलुओसिअं; उद्दुसिअं, Tउडुहिअं.(87)HD. (उल्लसिअ) 1.115. B उलुसिअ, T उल्लसिअं. (88) HD. (चिमिणो) 3.11. KS विमिणं; M om. (89) HD.(°कसिअं) 1.115. KS दुलुकुसिअं; T उल्लुकुसिअं; M om. (90) HD. 1.141. K ऊसरिअं, MS ऊसलिल. (91) HD.1.55. B असंगिओ, Tअंसंगिओ. (92)HD. 1.77. C आरोइअं. (93) HD. 1.112. B ओच्छ-ण्डिअं; C ओच्छन्दिअं; K उच्छड्डिअ; S उच्छडिअं. B शरीरादि° for शरादि°. T अवमृतं for अपहृतं. (94) B छण्डिअं, M चंढिअं, T चकभिअं. (95) B ऊसंसिअं; C ऊसुम्मिअं; T ऊसासअं. (96) HD. 1.140. B ऊसिअ. (97) HD. 1.76. B आलिअं; M आपिअं; T आसीअं. (98) HD. 1.23. B अवहिट्ठो; S अवहच्छो; $T_1$ अवहोट्टो, $T_2$ अवहेट्टो. (99) HD. 1.75. C आरोद्धो; S आरंधो. KS गुहायातश्च, T ग्रहा° for गृहायातश्च. (100) HD. (घुत्तिअं) 2.109. B उडिअं. (101) HD. 2.109. B घसणिअं; KS घुसि-णअं; M घुसणिअं. (102) HD. 2.109. C घुग्घुस्सुअं; MS घुग्घुंसुअं.

(१०३) उल्लूढो (१०४) उच्चप्पो आरूढः । (१०५) खवलिओ कुपितः । (१०६) चक्कडिअं प्रीणितम् । (१०७) उव्वत्तो गलितो विरक्तश्च । (१०८) गुडिओ संनद्धः । (१०९) गुम्मइओ आपूरितः स्खलितः आमूलात्संवलितः मूढः विघटितश्च । (११०) पडिरिग्गअं भग्नम् । (१११) परिअड्डिअं प्रकटितम् । (११२) परिअट्टलिअं परिच्छिन्नम् । (११३) ओप्पं मृष्टम् । (११४) कोज्जरिअं पूरितम् । (११५) उम्मलं घनीभूतम् । (११६) वेल्लाइअं (११७) खडइअं संकुचितम् । (११८) झण्टिअं प्रहृतम् । (११९) अणुअज्झिओ प्रयातः प्रतिजागरितश्च । (१२०) णज्झरं दलितम् । (१२१) उलुहुलिओ अवितृप्तः । (१२२) वप्पिअं (खप्पिअं ?) (१२३) आरोग्गिअं भुक्तम् (१२४) उब्भालणं (१२५) उच्छुण्णं (१२६) अहिरेइअं (१२७) उद्धुमाअं (१२८) अप्पुण्णं परिपूर्णम् ।

(103) HD. 1.100. B उल्लूडो. (104) HD. 1.100. B उच्छूडो; C उच्छूढो, KM उच्चओ, S उंचओ. (105) HD. 2.72. B आविलिओ, K खविलिओ, T अवलिओ. (106). HD. (चक्खडिअं) 3 6. B कडिअं; $T_1$ चकसअं; $T_2$ चकडिअ. (107) HD. 1.129. B उप्पत्तो, KM उत्तत्तो; S उत्ततो T उपंतो. (108) T गुढओ. (109) HD. 2.103. T गम्मइओ. (110) HD. (पडिरजिअं) 6.32. K पडिरिग्गिअं, M पडिरिंभिअ, S पडिरंगिअ; T विसिरिंटिअं. (111) M परिअत्तिअं, S परिअत्थिअ. (112) HD. 6.36. C परिअट्टविअं. B परिच्छन्नं for परिच्छिन्नम्. (113) HD. (ओप्पा) 1.148. (114) HD. (कोज्झरिअं) 2.50. (115) HD. 1.91. C ओम्मलं. (116) HD.7.79. B वेल्लइअं. (117) HD. 2.72.B घडइअ. (118)HD. 3.55.C झदिअं, MS झंढिअं. (119)HD. (अणुवज्जिअं) 1.41.C अणुझिअओ; T अणुअज्झओ. (120) HD. (णज्झरो) 4.19. C पज्जतरं, T णज्झरि.(121) HD.(उलुहलिओ) 1.117. CKMS उलुहुलअं, T उलुभुलिओ. (122).खप्पिअं ? HD. (खरिअं) 2.67. M खप्पिअं, $T_1$ पप्पिअं, $T_2$ पपिअं. (123) HD. 1.69. B आरोग्गिरिअं, C आरोग्गरिअं. (124) HD. 1.103. B उग्गालणं; C उल्लअं. (125) B उघण; उसुण्ण; T उप्पणिं. (126) B अहिरोइअं;T अहिरेहिइअं. (127) C अदुमाअं, S उद्दुमाअ, T उड्डुमाअं. (128) HD. (अप्फुण्णं) 1.20.M अप्फुण्णं. S अग्घण्णं.

(१२९) पच्चावेणिओ संमुखमागतः। (१३०) दुग्गुच्छं भ्रमितम्। (१३१) वट्टाविअं समापितम्। (१३२) पारद्धं अभिपीडितम्। (१३३) उद्दालिअं रणद्रुतम्। (१३४) उज्झमाणं पलायितम्। (१३५) विडत्तं अर्जितम् (१३६) छिक्कं स्पृष्टम्। (१३७) थेणिल्लअं हृतम्। (१३८) विउलो आविग्नः। (१३९) साणिअं (१४०) तिक्खालिअं शातम्। (१४१) सोहिल्लं (१४२) पक्कं (१४३) समराइअं (१४४) आइप्पणं पिष्टम्। (१४५) ओत्थअं (१४६) ओसविअं अवसन्नम्। (१४७) पडिसारिअं स्मृतम्। (१४८) पेण्डइअं पिण्डितम्। (१४९) उग्गहिओ निपुणगृहीतः विरचितश्च। (१५०) गमिअं अवधूतम्। (१५१) उद्दच्छिओ निषिद्धः। (१५२) णिग्गिण्णो निर्गतः। (१५३) किवाडो स्खलितः। (१५४) लोट्टो अत्यासक्तः स्मृतश्च।

---

(129) HD. (पच्चोवणी) 6.24. C S पच्छाणिओ; $T_1$ उच्चावेणिओ. (130) B दुगुच्छं; C अग्गुच्छं, S दुगुछं. (131) C पट्टाविअ; M पट्टविअं, S वटाविअं, T वत्साविअ. (132) HD. 6.77. C वारद्ध, S पारंध.T पराद्धि. (133) HD. (उद्दलिअं) 1.100. C उद्दारिअं. KS रणहृतं, MT रणभृत for रणद्रुतम्. (134) HD. (उज्झमण) 1.103. (135) B विट्टिअ, C विट्टितं; M पिढत्त. (136) HD. 3.36. (137) HD. (थेणिल्लिअं) 5.32. B वेणिल्लअ. C पणिल्लअं. T भृतं for हृतम्. (138) HD. (विओलो) 7.63 C पिउओ, K विउरो. (139) HD. (साणइअं) 8.13. T साणिअअ. (140) HD. 5.13. B णिक्खालिअं, C णिक्खाविओ; K भिक्खालिअं, M हिक्खालिअं, S भिक्कालिअ, BKMS श्रातं; T (अ)वशातं for शातम्. (141) C सोहिअं, K साहिल्लं, T सोरिल्लि. (142) HD. (पक्को)6.64. MS पकं. (143) T सराइअ for समराइअं. (144) HD. 1.78. K आइप्पपणं, M आइव्वरणं, S आइंपपणं; (145) HD. (ओत्थओ) 1.151. (146) HD. (ओसव्विअं) 1.168. BT ओसप्पिअं. (147) HD. 6.33. T पाडिसारिअं. (148) HD. (पेंड) 6.81. B वेंटइअ, C वडइअं, MS पेड्डइअं. (149) HD. (उग्गहिअं) 1.104. C अग्गहिओ; M उग्गविओ. (150) C गविअ for गमिअ.(151) B उद्दुच्छिओ; C विडुच्छओ;K ओद्दच्छिओ;$MT_1$ उद्धच्छिओ, $T_2$ उड्डच्छिओ. (152) HD. 4.36. B णिगिण्णो; C णग्गट्टो; KMS णिग्गिंणो; T णिट्टिण्णो. (153) HD. (किंबोडो) 2.31. C किपाडो, KS कवाडो. (154) HD. (लोढो) 7.29. C लोट्ठो, KS om., T लोट्टा.

(१५५) प वि रं जि ओ स्निग्धः।(१५६) हु रु हु ण्डि अं (१५७) उ द्धू लि अं (१५८) ओ स त्तं अवनतम् (१५९) ओ ज्झ रि अं प्रक्षिप्तं विक्षिप्तं च। (१६०) वि स्सु ओ (१६१) व व हि ओ उन्मत्तः।(१६२) प रि क्खा-इ अ अं परिक्षीणम्। (१६३) छि क्कं (१६४) हे लु अं क्षुतम्। (१६५) थ मि अं विस्मृतम्। (१६६) अ ज्झ सि अं (१६७) अ व डा हि अं (१६८) उ क्का सं उत्कृष्टम्। (१६९) ह ल्ल प्फ लि अं त्वरितम् (१७०) उ द्दा रि अं उत्खातम्। (१७१) अट्टो यातः। (१७२) उ ल्लि क्कं दुश्चे-ष्टितम्। (१७३) उ च्छ ड्डि अं मुषितम् (१७४) वो ग्गि ण्णं (१७५) प रि अ म्मि अं अलंकृतम्। (१७६) उ क्कि अं प्रसृतम्। (१७७) झ त्थो (१७८) ल्हि क्को (१७९) मो ओ (१८०) स त्थो गतः।

---

(155) HD. 6.74. B पविरजवो, KS om., M परिराजिओ; T परिमंजिओ. (156) B उवडिअं; KS om.; T गुरुहुव्विअ. (157) B उद्दू-लिअं; C उद्दूविअं, KS om. (158) Sk अवसक्तम्. B ओणअं, KS om. (159) HD. (उज्झरिअ) 1.133. KS om. (160) KS om; M अप्पुओ; $T_1$ विप्सुओ; $T_2$ पिप्सुओ. (161) Sk व्यवहितः. B अविहिओ; KS om.; T पवहिओ. (162) Sk परिक्षायितम्. KS om.; M परिभाउअ, T परिगा-हिअं. (163) HD. 3.36. C चिक; KS om.; (164) HD. 8.72. B पिलुअं; KS om., M छेलुअं, $T_1$ हेलुहअं; $T_2$ हेलहअं. (165) HD.5.25. B पविग्घ, KMS om. (166) HD. 1.30. C उज्झासिअं; KS om.; M अज्झंसिअं; T अज्झस्सिअं. (167) HD. 1.47. KS om; T अवाविअ. After अवडाहिअं S adds लोट्टिरो (cf.HD.7.25)अत्यासक्तः. (168) HD. (उक्कासिअं) 1.114. BM उक्कोसं उत्कृष्टम्, KS om. (169) HD. 8.59. B हल्लपविअं, C हल्लपविअं;K पहुल्लकरिअ or पहुल्लपरिअ, Mom.;S पहुल्लपलिअं; T हल्लफलिअं. (170) HD. (उद्दरिअ) 1.110. M om; S उद्दालिअ; (171) HD. 1.10. C आरिट्टो; K अट्टग्गो; M om., S अट्टंगो. (172) M om;T अल्लिक. (173) HD. (उच्छडिअ) 1.112. C उच्चादिअं, M om; S उच्छेदिअं; T उड्डिअ. (174) B उग्गिअं, K दोग्गीणं, S दीगिणं. (175) Sk. परिकर्मितम्. B पट्टिअम्मिअं; M परिअमिअं. (176) CT उक्कअं for उक्किअं. (177) HD. (झत्थं) 3.61. B गत्तो; KS झत्तो, T कत्थो. (178) T लिक्को for ल्हिक्को. (179) HD. 6.148. B om. (180) HD. 1.8. B सत्तो; C गावो; K अच्छो; S अत्थो.

(१८१) खसिअं (१८२) उच्छुरिअं (१८३) पडिहत्थो आपूर्णम्। (१८४) णिज्जरं जीर्णं खिन्नं च। (१८५) उज्जल्लो (१८६) उच्छुल्लो (१८७) उब्बालो (१८८) अवाहिओ। (१८९) उत्तप्पो अध्यासिनम्। (१९०) ओइल्लअं (१९०अ) उक्कुण्डं विप्रलब्धः। (१९१) उद्धच्छो लिप्तम्। (१९२) छूहिअं पार्श्वपरावृत्तम्। (१९३) अणग्गपल्लइं पुनरुक्तम्। (१९४) अण्णसअं आस्तृतम्। (१९५) उप्पड्डिअं नष्टम्। (१९६) अणहप्पणअं भर्त्सितम्। (१९७) उज्झरिओ (१९८) उग्घओ। (१९९) विमइओ। (२००) मइओ (२०१) पइओ विस्तीर्णं। (२०२) कुद्दो (२०३) वामो (२०४) अवगदो (२०५) पइण्णो (२०६) धुत्तो आक्रान्तम्।

---

(181) M om. खसिअ. (182) HD. (उच्छुरं) 1.90. B विच्छुरिअं; K उच्छूरितं; M om. S उदूरितः. (183) HD. 6.19. B पडिहत्थं अपूर्वम्. (184) HD. (णिज्झरं) 4.26. S णिउरं, S om. जीर्णं. (1.85.) HG. 2 174. HD. 1.97. B उच्चल्लो, T अल्लो. (186) HD. 1.131. BT उप्पल्लो, K उच्छणो; M उच्छुण्णो; S उच्छूणो, $T_2$ उच्चुण्णो. (187) HD. (ओब्बालो ) 1.102. B उव्वालो; C उप्यल्लो, S ओब्बोलो; T उबोलो. (188) B अजडिओ; T अवानिओ (189) HD. 1.131. B उत्तत्तो; T om. (190) HD. (ओइल्लं) 1.158. CM ओअल्लअ. (190 A) HD. (उक्कुडो) 1 91. B उक्कुड्ड, C उक्कंद, M उक्कुड्ढं; T कूटं. (191) HD. (उद्धत्थो) 1.96. B उद्दच्छो; C उडंबो; M उड्ढच्छो; T उद्धचो. (192) HD. 3.30. B छूहिअं, M छुहित. (193) अपिद्दवलइं, T अणग्गपल्लग्गं. (194) B अण्णासअ. T अस्मृतं for आस्तृतम्. (195) C अपंडिअ, S उप्पडिअं; T इच्छड्ढिअं. (196) HD. 1.48. BC अणहवणअ; T अणहप्पणिअं. (197) HD. (उज्झरिअं) 1.133. C उक्करिओ, KMT उज्जरिओ. (198) HD (उग्घाओ) 1.126. C ओघिओ; T उग्घओसिओ. (199) HD. (विमइअं) 7.71. C मरिओ, T घिमइओ. (200) HD. ( मइअं भर्त्सितम् ) 6.114. B मइचो, M om.; S तुइओ; T मगुओ. (201) HD. (पइअ भर्त्सितम्) 6.64. T चइओ. (202)HD. (कुद्दं) 2.34. C रुद्दो; S कुदो. (203) HD. 7.47. KS पपामो; M पवामो; T पामो. (204) HD. (अवगदं, 1.30, C अवगळो. (205) HD. 6.7. C वेण्णो. (206) HD. 5.58.

(२०७) ओ क्ख लि अ (२०८) ओ र म्पि अं (२०९) उ क्ख ण्डि अं त्रुटितम् खण्डितमित्यर्थः। (२१०) अ ण्णं (२११) क प्प रि अं आरोपितम्।(२१२) आ ह वि ओ चूर्णितम्। (२१३) उ ल्लु ण्टि अं (२१४) दु ह अं (२१५) उ त्थि अं (२१६) उ क्का सि अं (२१७) ओ त्थ रि अं रणलब्धम्। (२१८) ओ म हि अं पुरस्कृतम्। (२१९) व क्ख लि अं उत्सङ्गितम्। (२२०) उ अ- क्कि अं पुञ्जीकृतम्। (२२१) पि ण्ड इ अं प्रशान्तम्। (२२२) उ लु हु ण्डि अं हेषितम्। (२२४) हे क्कि अं (२२५) ही स म णं उन्नतम्, उत्तमं चुम्बितं च। (२२६) मु म्मि अं (२२७) मु ल्लि अं शीलितम्। (२२८) म हु रा लि अं (२२९) णि स्सी मि ओ निर्वासितः। (२३०) वि क्खि ण्णो अवकीर्णः। (२३१) णि रिं त्तो नतः। (२३२) गु म्मि ओ मूलोत्सन्नम्।

(207) HD. (ओक्खण्डिअ) 1.112. C उक्करिअ, S ओंखलिअं, T ओक्ख- पिअं. (208) HD. 1.171. B ओरपिअं, C उरविअ; M आरंपिअ. (209) HD. 1.112. C उक्काडिअं, K उक्खुंटिअं, MS उक्खुट्टिअं, T इक्कुडिअ. (210) KMST om; HD. does not give this word. (211) HD. 2.20. B कव्वरिअं, KS कपरिअं आरोपित. (212) B अहविओ; C आटविओ; S अहदिओ. K घूर्णित, M चूर्णित, S पूर्णित for चूर्णितम्. (213) HD. 1.109. BT उल्लुट्टिअ, उल्लुअं; M उल्लड्ढिअ, S टलंटिअं. (214) HD. (दुहओ) 5.45. C धुहअं; T लुहअं; (215) C ओउल्लिअं; KMS उत्थितं. (216) HD. 1.114. C उक्कोसिअ; M उक्कासिअ. (217) HD. (ओत्थरिओ) 1.169. B ओदरिअं, C उच्चरिअ; K ओच्छरिअ; M ओचरिअं, ST ओत्थरिओ. (218) T ओधहिअ for ओमृहिअ. (219) HD. (वक्कलय) 7.46. C वणनत्तडिअं; K वंझलतं, M पक्कलिअ; S वज्झलअं; T वक्कलअं. (220) HD. 1.107. C वलक्किअं उय्यक्किअं, S उआकिअं, T उअंगिअं. (221) HD. 6.54. C पिड्डइअ, M वेंठइअं; S पेड्डइअं T पेंडइअं. (222) HD. (उलुउण्डिअ) 1.119. M उलुउडिअ; S उलुहुंडिलं; T उलुहुल्लिअं. (224) CM हक्किअं; T हेगिअ. (225) HD. 8.68. B हिसमणं; C हेसमणं; T हिसमणि. (226) T गुट्टिअ for मुम्मिअं. (227) M मुल्लं; T गुल्लि. S सिलितं for शीलितम्. (228) HD. 6.125. M मुहरा- ल्लिअं. (229) Sk निःसीमितः. B णिस्सिमिओ. (230) HD. ( विक्खिण्णं ) 7.88. KS विक्खिणो. HD. अवतीर्णः for अवकीर्णः. (231) HD. णिरिंको) 4.30. T णिरिक्को. B नृत्तः for नतः. (232) B गुम्मुओ मूलोत्पन्नः for गुम्मिओ मूलोत्सन्नः.

(२३३) णि रु त्तं निश्चितम्। (२३४) प क्क ड्डि अं प्रस्फुरितम्। (२३५) ख ण्डि ओ मद्यासक्तः। (२३६) वे ट्ठि ओ वेष्टितः।(२३७) वो ली णो अतिक्रान्तः। (२३८) णि म्मि ओ स्थापितः। (२३९) ल क्खि ओ (२४०) मि ओ विघटितः। (२४१) णि च्च णि ओ जलधौतः। (२४२) च क्खि अं आस्वादितम्। (२४३) तु च्छ अं रञ्जितम्। (२४४) रे क्कि अं आक्षिप्तम्। (२४५) प र ड्डो भीतः पतितः पीडितश्च। (२४६) प डि अ ग्गि अं वर्धापितं परिभुक्तं च। (२४७) उच्छुल्लो विधारितः। (२४८) ण डि ओ वञ्चितः। (२४९) ओ स क्कि ओ (२५०) स ग्ग ओ (२५१) फंसु लो मुक्तः। (२५२) गु मि लो मूढः स्खलितः आपूर्णश्च। (२५३) संसो सि ओ चूर्णितः भीतः आरूढः उद्विग्नश्च। (२५४) उ च्च छो (२५५) अ ज्झं सि अं दृष्टम्। इत्यादि ॥ १३२ ॥

---

(233) HD. 4.30. T णीरुत्ती. (234) HD. (पक्खड्डिअ) 6.20. M पक्काडिअ, S पंकडिअं; T पक्कसीअ; (235) HD. 2.78. B ओण्डिओ. Bp T अन्यासक्त for मद्यासक्तः. (236) M वेंडिओ for वेट्ठिओ. (237) B वोरिणो for वोलीणो. (238) B जणिम्मिओ, M णिमिओ; T णिरीओ. (239) M लक्खओ, S लंखओ. (240) S मिवो for मिओ. (241) ? (242) From चक्ख. (243) HD. 5.15. B तुत्थअं; M उत्थअं. (244) HD. (रेंकिअ) B किक्किअ; MT रेंकिअं. S लेक्किअं. (245) M वरंदो, S परटो; T परग्गो. (246) HD. 6.74. M पडिअंटिअ; S पडिअंगिअं, T पढिघट्टिअ. (274) HD. 1.131. M उच्छल्लो, S उद्दुल्लो, T उच्छुलो. T विदारितः for विधारितः (248) HD. 4.10. B णिाडिओ. (249) HD. (ओसक्की) 1.149. B इूसक्किओ, C ऊरिसाकिओ, M ओसिक्किओ; S इूसिंकिओ; T ऊसक्किओ. (250) HD. (सग्गहो or संगहो) 8.4. C नंगओ, M सगओ. (251) HD. (फसुलो) 6.82. B पुंसुलो, C पंसुलो; S घुंसुलो. (252) HD. (गुमिल) 2.102. B मुमिलो, C गमिदो, T उमिलो. (253) BC संसाओ, KST संशोषितं चूर्णम् for चूर्णितः. (254) B om.; C उत्तुवों; S उंचल्लो. (255) HD. 1.30. B उज्झसिअं. B om. दृष्टम्.

**धातवोऽर्थान्तरेष्वपि ॥ १३३ ॥**

उक्तेभ्योऽर्थेभ्योऽर्थान्तरेष्वपि धातवो वर्तन्ते । वलि॰ प्राणने पठितः, खादनेऽपि वर्तते । वलइ खादति प्राणनं करोति वा ॥ एवं कलिः संख्याने संज्ञाने च । कलइ जानाति संख्यानं करोति वा ॥ गिरिर्गतौ प्रवेशे च । गिरइ प्रविशति गच्छति वा ॥ काक्षते. पम्फ आदेशः प्राकृते । पम्फइ इच्छति खादति वा ॥ पङ्कतेः (?) थक्क आदेशः । थक्कइ नीचा गतिं करोति विलम्बयति वा ॥ विलप्युपालम्भिसंतपिनिश्वसा झंखादेशः । झंखइ विलपति उपालभते संतपति निःश्वसिति वा ॥ केचित्कैश्चिदुपसर्गैर्नित्यम् । पहरइ युध्यते । संहरइ संवृणोति । अणुहरइ सदृशो भवति । णीहरइ पुरीषोत्सर्गं करोति । विहरइ क्रीडति । आहरइ खादति । पडिहरइ पुनः पूरयति । परिहरइ त्यजति । उपहरइ पूजयति । वाहरइ आह्वयति । पवसइ देशान्तरं गच्छति । उच्छुवइ चोरयति । उल्लुहइ निःसरति ॥ १३३ ॥

इति श्रीमदर्हनन्दित्रैविद्यदेवश्रुतधरश्रीपादप्रसादासादितसमस्तविद्याप्रभाव-
श्रीमत्त्रिविक्रमदेवविरचितप्राकृतव्याकरणवृत्तौ
तृतीयाध्यायस्य प्रथमः पादः ॥

---

133. S ओलइ for वलइ. B संस्थान; K सज्ञानं for संज्ञान. K प्रवेशेपि for प्रवेशे च. M फंफ for पम्फ. M फफइ for पम्फइ. K काक्षति for इच्छति. S om. इच्छति. $T_1$ विकतेः, $T_2$ निकते॰ for पङ्कते.. Bp निजा for नीचां. After निःश्वसिति KMS add भाषते. B णिहरइ for णीहरइ. KM उच्चुवइ; S उच्चव्वइ for उच्छुवइ. K चटति; S चडति; T चट्टति for चोरयति. B उल्लुहरइ; T उल्लरइ for उल्लुहइ. Colophon: M om. from °मदर्ह down to श्रीमत्. MS तृतीयस्याध्यायस्य for तृतीयाध्यायस्य.

## द्वितीयः पादः ॥

**दस्तस्य शौरसेन्यामखावचोऽस्तोः ॥ १ ॥**

शौरसेन्या भाषाया तकारस्य अखौ अनादौ वर्तमानस्य अचः परस्य अस्तोः असंयुक्तस्य दकारो भवति । तदो पूरिदपदिण्णेण मारुदिणा मन्तिदो । एतस्मात् एदाहि । सततं सददं ॥ अखाविति किम् । तथा तहा । तधा करेध । तरइ ॥ अच इति किम् । चिन्ता । मन्तिदं ॥ अस्तोरिति किम् । मन्तो । अय्यउत्तो । असंभाविदसक्कारं । हला सउन्तले ॥ १ ॥

**अधः क्वचित् ॥ २ ॥**

तस्येत्यनुवर्तते । शौरसेन्या संयोगे अधो वर्तमानस्य तस्य दकारो भवति, क्वचिल्लक्ष्यानुसारेण । महन्दो । अन्देउरं ॥ २ ॥

**तावति खोर्वा ॥ ३ ॥**

शौरसेन्या तावच्छब्दे खोः आदेस्तकारस्य दो वा भवति । दाव । ताव ॥ ३ ॥

**थो धः ॥ ४ ॥**

वेत्यनुवर्तते । शौरसेन्या थस्य धो वा भवति । कधेदि कहेदि, कथयति । कधं कहं, कथम् । पिधं पिहं, पृथक् । कधा कहा, कथा । अखाविल्येव । थामं । थेवं ॥ अच इत्येव । कन्था ॥ अस्तोरित्येव । तित्थं तीर्थम् ॥ ४ ॥

---

1. B read तकारस्य after असयुक्तस्य. B पूरिदपडिण्णेण for °पदिण्णेण. After एदाहि KS add पदाओ पताकः. BT करथा for करेध. K om. तरइ M करइ for तरइ. KS om. अय्यउत्तो. M असंभाविदसंकारं; T °संकरं for °सक्कारं. B सउन्दले, T सउद्दले for सउन्तले 2. B सयोगेऽधः क्वचित् for the Sūtra. KT अथ for अधः in the Sūtra. After लक्ष्यानुसारेण BT read महन्दा. T महद्दो for महन्दो After महन्दो M adds नमन्दो. T अंदेप्पारि for अन्देउरं. 4. S धो दः for the Sūtra. BT थाम for थामं. T किथा for कन्था. T सत्थं for तित्थं.

**इहहचोर्हस्य ॥ ५ ॥**

शौरसेन्यामिहशब्दस्य 'थघ्वमित्थाहचौ [ २·४·५ ] इति विहितस्य हच्प्रत्ययस्य च हकारस्य धकारो वा भवति। इध इह। होध होह। परित्ताअध परित्ताअह ॥ ५ ॥

**भुवो भः ॥ ६ ॥**

हस्येत्यनुवर्तते। शौरसेन्या भुवादेशस्य हकारस्य भकारो वा भवति। भोदि होदि भुवदि हुवदि हवदि ॥ ६ ॥

**अन्त्यादिदेति मो णः ॥ ७ ॥**

शौरसेन्यामन्त्यान्मकारात्परो णकारागमो वा भवति इदेति इकारे एकारे च परे। जुत्तं णिमं जुत्तमिणं, युक्तमिदम्। सरिसं णिमं सरिसमिणं, सदृशमिदम्। किं णेद किमेदं, किमेतत्। एवं णेदं एवमेदं, एवमेतत् ॥७॥

**र्यो य्यः ॥ ८ ॥**

शौरसेन्या र्यस्य स्थाने य्य इत्ययं वा भवति। अय्यउत्तो। पय्याउलीकिदम्हि। सुय्यो। कय्यपरवसो ॥ पक्षे। अज्जउत्तो। पज्जाउलीकिद म्हि। सुज्जो। कज्जपरवसो ॥ ८ ॥

**पूर्वस्य पुरवः ॥ ९ ॥**

शौरसेन्या पूर्वशब्दस्य पुरव इत्यादेशो वा भवति। अपुरवमेदं। पक्षे। अपुव्वमेदं ॥ ९ ॥

**इअदूणौ क्त्वः॥ १० ॥**

शौरसेन्या क्त्वाप्रत्ययस्य इअ दूण इत्यादेशौ वा भवतः। भविअ होदूण। पढिअ पढिदूण। रमिअ रमिदूण ॥ होत्ता भोत्ता पढित्ता रन्ता इति सिद्धावस्थाया वलोपे ॥ १० ॥

---

6. T भुवो ह्रा for the Sūtra. BT भवति for हवदि. 7. K युत्तं णिमं for जुत्तं णिम. K om. जुत्तमिण. K om. सरिसमिणं. 8. K om. स्थाने. K इति वा for इत्ययं वा. After सुय्यो K adds सूर्यः। पक्षे सुज्जो. ST om. कय्यपरवसो. K पज्जाउलीकद म्हि for °किद म्हि. K om. सुज्जो. 9. B पुरवमेद; M अपुरव णाडअं for अपुरवमेदं, B पुव्वमेदं for अपुव्वमेदं. 10. KMS इअऊणौ क्त्वः for the Sūtra. KM इअ ऊण for इअ दूण. K भोऊण for भोदूण. KT सोत्ता भोत्ता इति तु for होत्ता भोत्ता पढित्ता रन्ता इति. MT कत्ता for रन्ता. T मरिअ मारिदूण for रमिअ रमिदूण.

**कृगमोर्डदुअः ॥ ११ ॥**

कृञ् गम् इत्याभ्या परस्य क्त्वाप्रत्ययस्य डित् अदुअ इत्यादेशो वा भवति। कदुअ। गदुअ। करिअ। गमिअ। करिदूण। गमिदूण ॥ ११ ॥

**इदानीमो ल्दाणिं ॥ १२ ॥**

शौरसेन्यामिदानीमः स्थाने दाणिं इत्यादेशो लिद्भवति। लित्वान्न विकल्पः। अणन्दरकरणिज्जं दाणिं आणवेदु अय्यो।'तव्यत्ययश्च' [३·४·६९] इति सूत्रात् प्राकृतेऽपि। अण्णं दाणिं होइ ॥ १२ ॥

**तस्मात्ता ॥ १३ ॥**

शौरसेन्या तस्माच्छब्दः ता इत्यादेशमापद्यते। ता जाव पविसामि। ता अलं एदिणा माणेण ॥ १३ ॥

**णं नन्वर्थे ॥ १४ ॥**

शौरसेन्या नन्वर्थे णं इति निपातः प्रयोक्तव्यः। णं अफलोदअं। णं अय्यमिरसेहिं पुढमं एव्व आणत्तं। णं भवं मे अग्गदो चलदि ॥ १४ ॥

**अम्महे हर्षे ॥ १५ ॥**

शौरसेन्या अम्महे इति निपातो हर्षे प्रयोज्यः। अम्महे एदाए उम्मिलाए सुपरिघडिदो भवं ॥ १५ ॥

**हीही वैदूषके ॥ १६ ॥**

शौरसेन्या विदूषकसंबन्धिनि हर्षे हीही इति निपातः प्रयोक्तव्यः। हीही संपण्णा मणोरहा पिअवअस्सस्स ॥ १६ ॥

---

11. KM इत्येताभ्या for इत्याभ्या. KMS करिऊण गमिऊण for करिदूण गमिदूण. After गमिदूण KMS add गच्छिऊण. 12. KST om. लिद्. K अणतरं for अणन्दर°. BT अणतरं for अण्णं. T om. दाणिं. 13. T तस्मात्ताः for the Sūtra. 14. BT पढम for पुढमं. 15. T अम्हहे for अम्महे in the Sūtra, Com. and illustrations. KMS एक्काए for एदाए. 16. B विदूषके for वैदूषके. T मणोरधा for मणोरहा.

**हीमाणहे निर्वेदविस्मये ॥ १७ ॥**

शौरसेन्या हीमाणहे इति निपातः निर्वेदे विस्मये च प्रयोक्तव्यः। नि र्वे दे—हीमाणहे परिस्सन्ता अम्हे एदेण णिअविहिणो दुव्विलसिदेण, परिश्रान्ता वयमेतेन निजविधेर्दुर्विलसितेन ॥ वि स्म ये—हीमाणहे जीवन्तवच्छा मे जणणी ॥ १७ ॥

**एवार्थे एव्व ॥ १८ ॥**

शौरसेन्यामेवार्थे एव्व इति निपात. प्रयोज्यः। मह एव्व भणन्तस्स। सो एव्व देसो ॥ १८ ॥

**हञ्जे चेटयाह्वाने ॥ १९ ॥**

शौरसेन्या हञ्जे इति निपातः चेट्याह्वाने प्रयोज्यः। हञ्जे चदुरिए ॥ ॥ १९ ॥

**अतो ङसेर्दुदोश् ॥ २० ॥**

शौरसेन्यामकारात्परस्य ङसेः दु दो इत्येतौ शितौ भवतः। दूरादु। दूरादो एव्व ॥ २० ॥

**आत्सावामन्त्र्य इनो नः ॥ २१ ॥**

शौरसेन्यामिनो नकारस्य आमन्त्र्ये सौ परे आत्वं वा भवति। हो कञ्चुइआ। हो तवस्सिआ। हो मणस्सिआ ॥ २१ ॥

**मः ॥ २२ ॥**

शौरसेन्यामामन्त्र्ये सौ परे नकारस्य मकारो वा भवति। हो राअं। हो पिअवम्मं। हो सुकम्मं। भअवं कुसुमाउह ॥ पक्षे। सअलल्लोअन्तआरि भअवं हुदवह ॥ २२ ॥

---

17. KS om. शौरसेन्या. K om. निर्वेदे. KMS परिस्सतो हगे for परिस्सन्ता अम्हे. T जीविदवच्छा जीवतवच्छा. 18. KS य्येव्व इति, MT येव्व इति for एव्व इति. MST सो य्येव एसो for सो एव्व देसो. 19. KMS चउरिए for चदुरिए. 20. T दूरादो येव्व for दूरादो एव्व. 21. B हे for हो. KMST हो तवास्सि हो मण स्सि for हो तवस्सिआ हो मणस्सिआ. S मणंसि for मणस्सिआ. 22. B हे for हो throughout. B om. हे सुकम्मं. B सअलल्लोअ-अहिभवं हुदवह.

**भवताम् ॥ २३ ॥**

आमन्त्र्य इति निवृत्तम् । शौरसेन्या भवत्प्रकाराणा सौ परे नकारस्य मो भवति । किं भवं हिअएण चिन्तेदि, कि भवान् हृदयेन चिन्तयति । एदु भवं, पज्जलिदो भअवं हुदासणो, एतु भवान्, प्रज्वलितो भगवान्हुताशनः। मघवं पाकसासणो, मघवान् पाकशासनः । कअवं करेमि काइं च, कृतवान् करोमि करिष्यामि च ॥ २३ ॥

**भविष्यति स्सिः ॥ २४ ॥**

शौरसेन्या भविष्यदर्थे विहिते प्रत्यये परे स्सि इति भवति । हिस्सादीनामपवादः । भविस्सिदि । करिस्सिदि । गच्छिस्सिदि ॥ २४ ॥

**इचेचोर्दट् ॥ २५ ॥**

'लटस्तिप्ताविजेच्' [२·४·१] इति वर्तमाने प्रथमपुरुषैकवचनस्थाने विहितयोरिचेचोर्दकारागमो भवति । टित्वादादिः । रमदि रमदे । हसदि हसदे । गच्छदि गच्छदे । होदि । देदि । णेदि ॥ २५ ॥

**शेषं प्राकृतवत् ॥ २६ ॥**

शौरसेन्यामिह प्रकरणे यत्कार्यमुक्तं ततोऽन्यत्प्राकृतवदेव भवति । 'दिहौ मिथः से' [१·१·१८] इत्यारभ्य 'दस्तस्य शौरसेन्यामखावचोऽस्तोः' [३·२·१] इति सूत्रात् प्राग् यानि सूत्राणि, तेषु यान्युदाहरणानि तानि तदवस्थान्येत्र शौरसेन्या भवन्तीति विभागः प्रतिसूत्रमभ्यूह्य दर्शनीयः। यथा—अन्तावेई । जुवईजणो । मणसिला इत्यादि ॥ २६ ॥

---

23. KS मकारो for मो. ST किं एदं भवं for किं भव. S पज्जालिदो for पज्जलिदो. B महवं for मघवं. B पाअसासणो for पाक°. 24. KMS हिस्साद्यादीनामपवादः for हिस्सादीनामपवादः. T om. करिस्सिदि गच्छिस्सिदि. 25. BS इजेचोर्दट् for the Sūtra. KMT °विचेच् for °विजेच्. BS °रिजेचोः for °रिचेचोः. B टित्वादनुक्तमन्यन्यायेनादेः for टित्वादादिः. After हसदे KMS add अच्छदे अच्छदि. After होदि KMS add होदे. 26. M अन्दावेदि । जुवदिजणो । मणसिला for अन्तावेई. ...मणसिला. S मणंसिला for मणसिला.

**मागध्यां शौरसेनीवत् ॥ २७ ॥**

शेषमिति वर्तते । मागध्या यद्वक्ष्यते ततोऽन्यच्छौरसेनीवद् द्रष्टव्यम् । तत्र ' दस्तस्य शौरसेन्यामखावचोऽस्तोः ' [३·२·१] विशदु आउत्ते शामिपशादाअ ॥ 'अधः क्वचित्' [ ३·२·२ ] अले किं एशे महन्दे कलकले, किमेष महान्कलकलः ॥ ' तावति खोर्वा ' [ ३·२·३ ] मालेध वा मुञ्चेध वा, अयं दात्र से आगमे ॥ 'थो धः' [३·२·४] अले कुम्भीलआ कधेहि ॥ 'इहहचोर्हस्य' [३·२·५] ओशलध अय्या ओशलध ॥ 'भुवो भ ' [३·२·६] भोदि ॥ ' अन्त्यादिदेति मो णः ' [३·२·७] जुत्तं णिमं । शलिश णिमं ॥ ' र्यो य्यः ' [३·२·८] अय्य, एशे खु कुमाले मलअकेदू ॥ ' पूर्वस्य पुरवः ' [३·२·९] एशे अपुलवे ॥ ' इअदूणौ क्त्वः ' [ ३·२·१० ] किं खु शोहणे बम्हणे त्ति कलिअ लञ्ञा पदिग्गहे दिण्णे ॥ 'कृगमोर्डदुअः' [ ३·२·११ ] कदुअ । गदुअ ॥ 'इदानीमो ल्दाणिं' [३·२·१२] शुणध दाणिं, हगे शक्कावदालतित्थवाशी धीवले ॥ ' तस्मात्ता ' [३·२·१३] ता जाव उवविशामि ॥ 'णं नन्वर्थे' [ ३·२·१४ ] णं अवशलोवशप्पणीआ लाआणो शुणीअन्ते ॥ 'अम्महे हर्षे' [ ३·२·१५ ] अम्महे एदाए उम्मिलाए शुपलिघडिदे भवं ॥ 'हीही वैदूषके' [ ३·२·१६] हीही कोशम्बाणअरी एशा ॥ 'हीमाणहे निर्वेदविस्मये' [ ३·२·१७ ] निर्वेदे यथा विक्रान्तभीमे राक्षसः– हीमाणहे पलिश्शन्ता हगे एदेण णिअविहिणो दुव्विलशिदेण ॥ विस्मये यथा उदात्तराघवे राक्षसः–हीमाणहे जीवन्तवच्छा मे जणणी ॥ 'एवार्थे एव्वँ' [ ३·२·१८ ]

---

27. B मागध्या for मागध्या in the Sūtra. K om. शेषामिति वर्तते. B पशीददु भावमिश्शे for पविशदु...दाअ. K माउत्ते; S माउंते for आउत्ते. B सयेगेऽधः क्वचित् for अधः क्वचित्. K om. किमेष महान्कलकलः. KM जं दाव; T अअं दाव for अय दाव. K अम्मा for अय्या. B पुरवे for अपुलवे. KS इअऊणो for इअदूणौ. BMS बम्हणे शे त्ति for बम्हणे त्ति. K लण्णा for लञ्ञा. B शक्कावदालब्भन्तलवाशी for शक्कावदालतित्थवाशी. M om. °तित्थ.° K पविशमि for उवविशामि. T om. शुणीअन्ते. B विदूषके for वैदूषके. T om. from ही ही

मए एव्व ॥ 'हञ्जे चेट्याह्वाने' [ ३·२·१९ ] हञ्जे चदुलिए॥ 'अतो ङसेर्दु-दोश्' [ ३·२·२० ] अहं पि भागुलाअणादो मुद्दं पावेमि ॥ 'आत्सावामन्त्र्य इनो नः' [ ३·२·२१ ] हे कञ्चुइआ ॥ 'मः' [ ३·२·२२ ] हे लाअं ॥ 'भवताम्' [ ३·२·२३ ] एदु भवं शमणे भअवं महावीले ॥ 'भविष्यति स्सिः' [ ३·२·२४ ] कहिं णु एदे लुहिलप्पिए भविश्शिदि ॥ 'इचेचोर्दट्' [ ३·२·२५ ] अमच्चलऽकशे पेक्खिदुं इदो एव्व आअच्छदि ॥ अले किं एशे महन्दे कलकले शुणीअदि ॥ 'शेषं प्राकृतवत्' [ ३·२·२६ ] मागध्यामपि 'दिहौ मिथः से' [१·१·१८] इत्यारभ्य 'दस्तस्य शौरसेन्यामखावचोऽस्तोः' [ ३·२·१ ] इत्यस्य प्राग् यानि सूत्राणि, तेषु यान्युदाहरणानि सन्ति, तेषु मध्ये अमूनि तदवस्थान्येवेति विभागः स्वयमभ्यूह्य दर्शनीयः ॥ २७ ॥

**त्वाङ्गाहो ङसः ॥ २८ ॥**

मागध्यामित्यनुवर्तते । मागध्या आत् अवर्णात्परस्य ङसः डित् आह इत्यादेशो भवति तु । हगे न एलिशाह कम्माह काली, अहं न ईदृशस्य कर्मणः कारी । भअदत्तशोणिदाह कुम्भे, भगदत्तशोणितस्य कुम्भ. ॥ पक्षे । भीमशेणश्श पश्चादो आहिण्डीअदि । हिडिम्बाए घडुक्कअशोए ण उव-शमदि ॥ २८ ॥

**आमो डाहङ् ॥ २९ ॥**

मागध्यामवर्णात्परस्य आमो डाहादेशो डिद्वा भवति । डित्त्वात्सानु-नासिक उच्चारः । शअणाहँ मुहं, स्वजनाना मुखम् ॥ पक्षे णलिन्दाणं । शअणाणं ॥ व्यत्ययात्प्राकृतेऽपि डाहङ् । तुम्हाहं । अम्हाहं । सरिसाहं । कम्माहं ॥ २९ ॥

---

वैदूषके down to एशा. B शंवाहणअरी for कोशम्बा णअरी. B यथा राक्षसी for यथा विक्रान्तभीमे राक्षस·. K चउलिये; M चउलिके; T चदुलिके for चदुलिए BK हगे वि for अहं पि. B भव महावले for भअवं महावीले. B इजेचो· for इचेचोः. T पेऽ किदु for पेक्खिदुं. 28. M वर्तते for अनुवर्तते. M om. तु. K आहिदाअदि for आहिण्डीअदि. BT कुटुंबअशोए for घडुक्कअशोए. 29. KMT आमो डित् for the Sūtra. B सुहं for मुहं. B न डाहङ् for णलिन्दाणं. KMS om. शअणाणं.

**सौ पुंस्येलतः ॥ ३० ॥**

मागध्या पुंलिङ्गे अकारस्य एकारो भवति सौ परे। लित्वान्न विकल्पः। एषः मेषः, एशे मेशे। एषः पुरुषः, एशे पुलिशे॥ अत इति किम्। निधिः णिही॥ पुंसीति किम्। जं। जलं॥ ३०॥

**हगेऽहंवयमोः ॥ ३१ ॥**

मागध्यामहंवयमोः स्थाने हगे इत्यादेशो भवति। हगे शक्कावआलतित्थ-वाशी धीवले। हगे शंपत्ता, वयं संप्राप्ताः॥ ३१॥

**छोऽनादौ श्चः ॥ ३२ ॥**

मागध्यामनादौ वर्तमानस्य छकारस्य शकाराक्रान्तश्चकारो भवति। गच्छ गच्छ, गश्च गश्च। उच्छलति उश्चलदि। पिच्छिलः पिश्चिले॥ लाक्षणिकस्यापि। आपन्नवत्सलः आवण्णवच्छलो आवण्णवश्चले। तिर्यक् प्रेक्षते, तिरिच्छि पेच्छइ, तिलिश्चि पेश्चदि॥ अनादाविति किम्। छाले॥ ३२॥

**क्षः ᳵकः ॥ ३३ ॥**

मागध्यामनादौ वर्तमानस्य क्षकारस्य जिह्वामूलीयाक्रान्तककारो भवति। यक्षः यᳵके। राक्षसः लᳵकशे॥ अनादावित्येव। खए॥ ३३॥

**स्कः प्रेक्षाचक्षेः ॥ ३४ ॥**

मागध्या प्रेक्षतेराचक्षतेश्च क्षस्य सकाराक्रान्तः ककारो भवति। क्षः ᳵकः [३:२·३३] इत्यस्यापवादः। पेस्कदि। आअस्कादि॥ ३४॥

---

30. K एसे मेसे for एशे मेशे. KS णिहि(ही). After णिही KS add झलि। पुंसीति किं। जलं; MT add कली. KS om. जं. T om. जलं. 31. शक्कावदालब्भन्तलवाशी. KS °वासि for °वाशी. 32. T om. the Sūtra and Com. BT पिश्चिलो for पिश्चिले. KS तिरिच्छ पेच्छइ तिरिश्च पेश्चदि for तिरिच्छि...पेश्चदि. 33. KMS क्षष्कः for the Sūtra, i. e. these Mss. do not use the sign of जिह्वा-मूलीय here and also in the Com. K यष्के लष्कशे for यᳵके लᳵकशे. M om. खले; K खए क्षयः; S खअजले, T खयकाले for खए. 34. B om. क्षस्य.

**सः सषोः संयोगेऽग्रीष्मे ॥ ३५ ॥**

मागध्या सकारषकारयोः संयोगे वर्तमानयोः सकारो भवति, अग्रीष्मे ग्रीष्मशब्दे न भवति । ऊर्ध्वलोपाद्यपवादः । स.—पस्खलदि । हस्ती । बहस्पदी । मस्कली । विस्मये ॥ षः—शुष्कदारु शुस्कदालु । कष्टं कस्तं । शष्पकवलः शस्पकवले । धनुष्काण्डं धणुस्कण्डं ॥ अग्रीष्म इति किम् । गिम्हवाशले ॥ ३५ ॥

**स्रोः श्लौ ॥ ३६ ॥**

मागध्या स्रोः सकाररेफयोः शकारलकारौ यथासंख्यं भवतः । सः—समः शमे । हंस हंशे । स्तुतिः शुदी । शोभनम् शोहणं ॥ रः—नरः नले । करः कले ॥ उभये—सारसः शालशे । पुरुषः पुलिशे ॥ ३६ ॥

**न्यण्यज्ञञ्जां ञ्ञः ॥ ३७ ॥**

मागध्या न्य ण्य ज्ञ ञ्ज इत्येषा ञः ञकारो भवति । रित्वाद् द्वित्वम् । न्य—अभिमन्युकुमारः अहिमञ्ञुकुमाले । कन्यका कञ्ञआ । सामान्यं शामञ्ञं ॥ ण्य—पुण्यवान् पुञ्ञवन्ते । अब्रह्मण्यम् अब्बम्हञ्ञं ॥ ज्ञ—प्रज्ञा पञ्ञा ॥ ञ्ज—अञ्जलि. अञ्जली । धनञ्जयः धणञ्ञए । पातञ्जलः पाअञ्ञले ॥ ३७ ॥

**जो व्रजेः ॥ ३८ ॥**

मागध्या व्रजतेर्जकारस्य ञ्ञ भवति । यस्यापवादः । वञ्ञदि । वञ्ञदे ॥ ३८ ॥

**जयद्यां यः ॥ ३९ ॥**

मागध्या जकारयकारद्यकाराणा यकारो भवति । ज—जानाति याणादि । जनपदः यणवए । दुर्जनः दुय्यणे । गर्जति गय्यदि ॥ य—यानपात्रं याणवत्तं ॥ द्य—मद्यं मय्यं । अद्य किल विद्याधरः आगतः, अय्य किल विय्याहले आअदे ॥ यस्य यत्वविधानं 'आदेर्जः' [ १·३·७४ ] इत्यस्य बाधनार्थम् ॥ ३९ ॥

---

35. T हस्ते for हस्ती. KT सुस्कदालु for शुस्कदालु. B धनुष्कुण्डं धणुस्कुण्डं; T धनुष्खंडी धनुस्खंडी. 36. ST श्रुतिः शुदी for स्तुतिः शुदी. K om. करः कले. MT प्राञ्जलिः पञ्ञली; S पाङ्जलः पंङले for पातंजलः पाअञ्ञले. 38. T ञ्ञ व्रजेः for the Sūtra. MS छस्यापवाद.; T छापवादः for यस्यापवादः. M om. अय्य किल विय्याहले आअदे. B विय्याहरे for विय्याहले. T बाधार्थं for बाधनार्थम्.

**ष्टट्टौ स्टम् ॥ ४० ॥**

मागध्या षकाराक्रान्तः ठकारः, द्विरुक्तः टकारश्च सकाराक्रान्तं टकारमापद्यते। ष्ठ—सुष्ठु कृतं शुस्टु कदं। कोष्ठागारं कोस्टागालं॥ ट्ट—पट्टं पस्टं। भट्टारिका भस्टालिआ। भट्टः भस्टे। भट्टिनी भस्टिणी॥ ४०॥

**स्थर्थौ स्तम् ॥ ४१ ॥**

मागध्या स्थ र्थ इत्येतौ सकाराक्रान्तं तकारमापद्येते। स्थ—उपस्थितः उवस्तिदे। सुस्थितः शुस्तिदे॥ र्थ—अर्थपति· अस्तवदी। सार्थवाहः शस्तवाहे॥ ४१॥

**चिष्ठस्तिष्ठस्य ॥ ४२ ॥**

मागध्यां स्थाधातोर्यः तिष्ठ इत्यादेशः तस्य चिष्ठ इत्यादेशो भवति। चिष्ठदि। चिष्ठदे॥ ४२॥

**नो नणोः पैशाच्याम् ॥ ४३ ॥**

पैशाच्या भाषाया नकारणकारयोर्नकारो भवति। पनमत पनयप्पकुवितं, प्रणमत प्रणयप्रकुपितम्। गुनगनजुत्तो गुणगणयुक्तः। गुनेन। गुणेन॥ नकारस्य नकारकरणं णत्वबाधनार्थम्॥ ४३॥

**न्यण्यज्ञां ञर् ॥ ४४ ॥**

पैशाच्या न्य ण्य ज्ञ इत्येतेषा ञकारो भवति। रित्त्वाद् द्वित्वम्। न्य—कन्यका कञ्ञका। अभिमन्युः अभिमञ्ञू॥ ण्य—पुण्यकर्मा पुञ्ञकम्मो। पुण्याहम् पुञ्ञाहं॥ ज्ञ—प्रज्ञा पञ्ञा। सर्वज्ञः सव्वञ्ञो। विज्ञः विञ्ञो। संज्ञानम् सञ्ञाणं॥ ४४॥

---

40. B छट्टौ स्थम्; MST छट्टौ स्तम् for the Sūtra. BM थकारमापद्यते; T तकारमापद्यते for टकारमापद्यते. B शुस्थु for शुस्टु. B कोस्थागारं; KS गोस्टागाल. B पस्थं; T पस्तं for पस्ट. B भस्तालिआ; T भस्तारिका for भस्टालिआ. B भस्थे for भस्टे. B भस्थिनी for भस्टिणी. 41. तकाराक्रान्तं सकार for सकाराक्रान्तं तकारं. K सुस्तिदे for शुस्तिदे. 42. B चिट्टः for चिष्ठः in the Sūtra, Com. and illustrations. T om. चिष्ठदि. 43. पनयप्पकुविअं for °प्पकुपितं. 44. After पञ्ञा KMS add सञ्ञा ञानी विञ्ञानं and om. from सर्वज्ञः down to सञ्ञाणं. After सव्वञ्ञो T adds ञानी विञ्ञानी.

**राज्ञो ञ्ञो वा चिञ् ॥ ४५ ॥**

पैशाच्या राजन्शब्दसंबन्धिनो ज्ञकारस्य चिञ् इत्यादेशो वा भवति। राचिञा लपितं। रञ्ञा लपितं। राचिञो धनं। रञ्ञो धनं॥ ज्ञ इति किम्। राजा ॥ ४५ ॥

**तदोः ॥ ४६ ॥**

पैशाच्यां तकारदकारयोस्तकारो भवति। लित्वान्न विकल्पः। त—भगवती भअवती। सततम् सततं ॥ द—मतनपरवसो। तामोतरो। वतनक। मालातो। मालातु। सिरीतो सिरीतु। तरीतो तरीतु। तरूतो तरूतु। वधूतो वधूतु। होतु। रमतु॥ तकारस्य तकारविधानमादेशान्तरबाधनार्थम्। तेन पताका वेतिसो इत्यादि सिद्धं भवति ॥ ४६ ॥

**शषोः सः ॥ ४७ ॥**

पैशाच्या शकारषकारयोः सो भवति। श—सोभनं। ससी। संखो। सङ्का। सक्को॥ ष—विसमो। किसनो कृष्णः। विसेसो॥ 'न प्रायो लुक्कादिच्छल्षट्छम्यन्तसूत्रोक्तम्' [ ३·२·६३ ] इत्यस्य बाधकस्य बाधनार्थोऽयं योगः ॥ ४७ ॥

**लो ळः ॥ ४८ ॥**

पैशाच्या लकारस्य ळकारो भवति। सीळं। कुळं। जळं। फळं कमळं ॥ ४८ ॥

---

45. K लविञ for लपितं. 46. After पैशाच्यां KMS add भाषाया. After भगवती KS add पव्वती सततं. KMS गिरीतो गिरीतु for सिरीतो सिरातु. KST नरीतो नरीतु. M नतीतो नतीतु for तरीतो तरीतु. K इति for इत्यादि. 47. K सोहनं for सोभनं. K om. सङ्का. M किसिनो T कसनो; for किसनो. B बाधनार्थेऽय for बाधनार्थोऽयं. 48. KS om. कमळं.

**दुस्तिर्यादृशगे ॥ ४९ ॥**

पैशाच्या यादृश इत्यादिषु दृ इत्यस्य स्थाने ति इत्यादेशो भवति। यादृशः यातिसो। भवादृशः भवातिसो। तादृशः तातिसो। अस्मादृशः अम्हातिसो। अन्यादृशः अञ्ञातिसो। ईदृशः ईतिसो। कीदृशः केतिसो। एतादृशः एतातिसो। इत्यादि ॥ ४९ ॥

**र्यस्नष्टां रिअसिनसिटाः क्वचित् ॥ ५० ॥**

पैशाच्या र्य स्न ष्ट इत्येतेषां यथासंख्यं रिअ सिन सिट इत्यादेशाः क्वचिद्भवन्ति। भार्या भारिआ। स्नानं सिनानं। कष्टं कसिटं ॥ क्वचिदिति किम्। अय्यो। सुसा। भट्ठो ॥ ५० ॥

**टोस्तु तु ॥ ५१ ॥**

पैशाच्या टु इत्यस्य तु इति भवति तु। कुटुम्बकं कुतुम्बकं ॥ ५१ ॥

**यः पो हृदये ॥ ५२ ॥**

पैशाच्या हृदयशब्दे यस्य पो भवति। हितपकं। किं पि हितपके अत्थं चिन्तयमानी ॥ ५२ ॥

**टा नेन तदिदमोः ॥ ५३ ॥**

पैशाच्या तदिदमोः स्थाने टावचनेन सह नेन इत्यादेशो भवति। नेन, तेन अनेन वा ॥ ५३ ॥

**नाए स्त्रियाम् ॥ ५४ ॥**

पैशाच्या तदिदमोः टावचनेन सह नाए इत्यादेशः स्त्रियां भवति। पूचितो च नाए पातवकुसुमपतानेन। नाए, तया अनया वा ॥ ५४ ॥

---

49. B एतिसो for ईतिसो. MT om. from. कीदृशः down to एतातिसो. 50. B र्यस्नष्टां for र्यस्नष्टां in the Sūtra. S हठे for भट्ठो. 52. B किंपि किंपि for किं पि. 54. B om. पूचितो च नाए वातवकुसुमपतानेन (पूजितश्च तया पादपकुसुमप्रदानेन).

**ङसेस्तोतुशतः॥ ॥ ५५ ॥**

पैशाच्याम् अकारात्परस्य ङसेः तो तु इत्येतौ भवतः। शित्त्वात्पूर्वस्य दीर्घः। ताव तीए तूरातो एव्व तिट्ठो। तुवातो तुवातु। ममातो ममातु ॥ ५५ ॥

**तडिजेचः ॥ ५६ ॥**

पैशाच्या लटः प्रथमपुरुषैकवचनादेशयोः इच् एच् इत्येतयोः तकारागमः टिद्भवति। टकार आदिविध्यर्थः। रमति रमते। हसति हसते। गच्छति गच्छते। होति। नेति ॥ ५६ ॥

**एय्य एव भविष्यति ॥ ५७ ॥**

पैशाच्यामिजेचोः स्थाने भविष्यति एय्य इत्ययमेव भवति न तु स्सिः। तं तट्ठून चिन्तितं रञ्जा का एसा हुवेय्य, ता दृष्ट्वा चिन्तितं राज्ञा कैषा भविष्यति॥ ५७ ॥

**इय्यो यकः ॥ ५८ ॥**

पैशाच्या यक्प्रत्ययस्य इय्य इत्यादेशो भवति। निय्यते। गिय्यते। रमिय्यते। पठिय्यते ॥ ५८ ॥

**कृञो डीरः ॥ ५९ ॥**

पैशाच्या कृञः परस्य यकः डित् ईर इत्यादेशो भवति। पुथुमतंसने सव्वस्स य्येव संमानं कीरते, प्रथमदर्शने सर्वस्यैव संमानः क्रियते ॥ ५९ ॥

---

55. MS तूरातो तूरातु for तुवातो तुवातु. BMS om. ताव तीए तूरातो एव्व तिट्ठो (तावत् तया दूरादेव दृष्टः). T येव्व for एव्व. 56. ST तडिचेचः for the Sūtra. B om. नेति. After नेति. T adds तेति. 57. T om. न तु स्सिः. B तत्थून for तट्ठून. T om from त तट्ठून down to भविष्यति. 58. T om. the Sūtra and Com. B नीइय्यते गीइय्यते for निय्यते गिय्यते. 59. T om. the Sūtra and Com. up to भवति. B पढमदंसने; M पुडुमतंसने; T पुडमतसने for पुथुमतसने.

**क्त्वा तूनं ॥ ६० ॥**

पैशाच्या क्त्वाप्रत्ययः तूनं इत्यादेशमापद्यते । गन्तूनं । रन्तूनं । मन्तूनं । हसितूनं । पठितूनं । कथितूनं ॥ ६० ॥

**ष्ट्वः ट्ठूनत्थूनौ ॥ ६१ ॥**

पैशाच्या षत्वे कृते ष्टा इति सिद्धस्य क्त्वाप्रत्ययस्य स्थाने ट्ठून त्थून इत्यादेशौ भवतः । तट्ठून तत्थून । नट्ठून नत्थून ॥ ६१ ॥

**शेषं शौरसेनीवत्॥ ६२ ॥**

पैशाच्या यदुक्तं ततोऽन्यच्छौरसेनीवद्भवति । अथ ससरीरो भगवं मकरद्धजो एत्थ परिभमन्तो हुवेय्य । एवंविधाए भगवतीए कथं तापस-वेसगहनं कतं । ईतिसं अतिट्ठपुरवं महाधनं तट्ठून भअवं अक्किमं वरं अच्छसे राअस्स । चंदावलोकातो रचनीए तूरातो एव्व तिट्ठो सो आगच्छमानो राजा ॥ ६२ ॥

**न प्रायो लुकादिच्छलषट्शम्यन्तसूत्रोक्तम् ॥ ६३ ॥**

पैशाच्या 'प्रायो लुक्गजदतदपयवाम्' [ १·३·८ ] इत्यारभ्य 'छलषट्छमीसुधाशात्रसप्तपर्णे' [ १·३·९० ] इति यावद्यानि सूत्राणि तैर्यदुक्तं कार्यं तन्न भवति । मकरकेतू । मगधपुत्तवचनं । विजयसेनेन लपितं । मतं । पापं । आयुधं । देवरो ॥ एवमन्यसूत्राणामप्युदाहरणानि द्रष्टव्यानि ॥ ६३ ॥

**रो लस्तु चूलिकापैशाच्याम् ॥ ६४ ॥**

चूलिकापैशाच्या भाषाया रेफस्य लकारो भवति तु ॥

पनमत पनयप्पकुपितकालीचलनक्कलक्कपतिपिंपं ।
तससु नखतप्पनेसुं एकातसतनुथलं लुत्तं ॥

---

60. KS om. गन्तूनं. 61. KS ठून थून, T धून थून for ठ्ठून त्थून. T नध्दून for नत्थून. 62. After पैशाच्या KM add भाषाया. B एव्व for हुवेय्य. B एतातिसं for ईतिसं. B om. from भअवं down to राजा. S अकिम for अक्किम. 63. After पैशाच्यां KM add भाषायां. MS सगरपुत्तवचनं; T सकरपुत्त° for मगधपुत्त°. 64. S लो लस्तु for रो लस्तु in the Sūtra. B °चलनग्गलग्गपतिबिम्ब for °चलनक्कल-क्कपतिपिम्पं. MS °चलनंकलंक° for चलनक्कलक्क°. T लुद्दं for लुत्तं.

नलो नरो । सलो सरो ॥ ६४ ॥

**गजडदबघझढधभां कचटतपखछठथफाः ॥ ६५ ॥**

चूलिकापैशाचिके ग ज ड द ब घ झ ढ ध भ इत्येतेषां यथासंख्यं क च ट त प ख छ ठ थ फ इत्येते लितो भवन्ति । नगरम् नकलं । मार्गणः मक्कनो । मेघः मेखो । घनः खनो । व्याघ्रः वक्खो । राजा राचा । जीमूतः चीमूतो । जर्जरम् चच्चलं । निर्झरः निच्छलो । झर्झरः छच्छलो । तडागम् तटाकं । डमरुकः टमलुको । मण्डलम् मण्टलं । गाढम् काठं । ढक्का ठक्का । षण्डः सण्टो । मदनः मतनो । दामोदरः तामोतलो । मन्दरः मन्तलो । मधुरम् मथुलं । धारा थाला । बान्धवः पन्थवो । बालकः पालको । रभसः रफसो । रम्भा लम्फा । भगवती फकवती । नियोजितम् नियोचितं ॥ कचि-ल्लाक्षणिकस्यापि । प्रतिमा पडिमा पटिमा । दंष्ट्रा दाढा ताठा ॥ ६५ ॥

**अन्येषामादियुजि न ॥ ६६ ॥**

अन्येषामाचार्याणां मते ग ज ड द ब घ झ ढ भ इत्येषामादौ स्थितानां युजिधातौ च क च ट त प ख छ ठ थ फा न भवन्ति । गती । घम्मो । जनो । झल्लरी । डमरुको । ढक्का । दानं । धूळी । बालो । फालं ॥ युज्–नियोजितं ॥ अन्येषामिति किम् । कती । नियोचितं ॥ ६६ ॥

**शेषं प्राग्वत् ॥ ६७ ॥**

चूलिकापैशाचिके 'रो लस्तु' [ ३·२·६४ ] इत्यादि यदुक्तं, ततोऽन्यत् प्राग्वत् प्राक्तनपैशाचिकवद्भवति । 'नो णनोः' [ ३·२·४३ ] नयनं । फनी ॥ एवमन्यदपि ॥ ६७ ॥

॥ इति श्रीमदर्हनन्दित्रैविद्यदेवश्रुतधरश्रीपादप्रसादासादितसमस्तविद्याप्रभाव-
श्रीमत्त्रिविक्रमदेवविरचितप्राकृतव्याकरणवृत्तौ
तृतीयाध्यायस्य द्वितीयः पादः ॥

---

65. KS नकेर for नकलं. KS जर्जरः चच्छलो. KMS om. दामोदरः तामोतलो. KS om. मधुरम् मथुल. KMS रभसं लफस. B रम्फा for लम्फा. KMS om. नियोजितम् नियोचितं. T om. कचिल्लाक्ष°...ताठा. 66. T om. the Sūtra and Com. K भालं for फाल. 67. B प्राक्तनपैशाचीवद् for °पैशाचिकवद्. Colophon KMST इति प्राकृतव्याकरणवृत्तौ तृतीयस्याध्यायस्य द्वितीयः पादः.

# तृतीयः पादः ॥

**प्रायोऽपभ्रंशेऽचोऽच् ॥ १ ॥**

अपभ्रंशे अचः स्थाने प्रायः अच् अन्यो भवति । कउ काउ । वेणा वेणी । बाह बाहा बाहुः । पट्ठं पुट्ठं पृष्ठम् । तणु तिणु तुणं तृणम् । सुकिदु सुकृदु सिकिउ सुकृतम् । लिह लिहा लेह लेखा । गउरं गोरं ॥ प्रायो- ग्रहणाद्यश्चापभ्रंशे विशेषो वक्ष्यते, तस्यापि क्वचित्प्राकृतवच्छौरसेनीवच्च कार्यं भवति ॥ १ ॥

**अचोऽस्तवोऽखौ कखतथपफा गघदधबभान् ॥ २ ॥**

अपभ्रंश इत्यनुवर्तते । अपभ्रंशे अचः परे अस्तवः असंयुक्ताः अखौ अनादौ वर्तमानाः क ख त थ प फ इत्येते वर्णा ग घ द ध ब भ इत्येतान् प्रायो यथासंख्यमापद्यन्ते ॥ २ ॥

कस्य गः ।

जं दिट्ठउँ सोमग्गहणु असइहिँ हसिउँ णिसंकु ।
पियमाणुसविच्छोहगरु गिलि गिलि राहु मियंकु ॥ १ ॥

[ = हे. ३९६·१ ]

[ यद् दृष्टं सोमग्रहणमसतीभिर्हसितं निःशङ्कम् ।
प्रियमनुष्यविक्षोभकरं गिल गिल राहो मृगाङ्कम् ॥ ]

---

1. S om. प्रायः in Com. MT कवु कावु for कउ काऊ. Bp. पिट्ठी for पुट्ठं. KS पिट्ठि पिट्ठी; M पट्ठी पिट्ठी for पट्ठ पुट्ठ. M तुणा; T तृणु for तुणु. KS सुकिउ for सुकिदु. KS सुकुउ; M om.; T सुकि for सुकृदु. S सकिउ for सिकिउ. MT लीहा for लिह. KMS गउरि गोरि for गउरं गोरं. T अपभ्रंशेऽपि for °भ्रंशे. M वक्तव्यं for कार्यं. 2. M अचोना- दावाखौ for अचोस्तवोखौ in the Sūtra. T °पफा for °प्फा in the Sūtra. KS om. कस्य गः. St. 1. T दिट्ठइ for दिट्ठउँ M सहिहिं; T सईहि. KS नीसंकु for णिसकु. T °माणस° for °माणुस°. KS °विच्छहगरु for विच्छोहगरु. KMS गिलु गिलु for गिलि गिलि. S मिअका for मिअंकु. BT °मानस° for °मनुष्य°. KS °मानुषविक्षोभगात्रं ( Corr. to कर्तुः ) for °मनुष्यविक्षोभकरं. KMS गिलु गिलु for गिलि गिलि.

खस्य घः ।

अम्मिएँ सत्थावत्थेहिं सुधिँ चिन्तिज्जइ माणु ।
पिएँ दिट्ठे हल्लोहलेंण को चेअइ अप्पाणु ॥ २ ॥
[ = हे.३९६·२ ].

[ अम्ब स्वस्थावस्थैः सुखेन चिन्त्यते मानः ।
प्रिये दृष्टे सुखपारवश्येन कश्चेतयत्यात्मानम् ॥ ]

तथपफाना दधबभाः ।

सबधु करेप्पिणु कधिदुँ मइँ तसु पर सभलउँ जम्मु ।
जासु न चाउ न चारभडी न य पम्हुट्ठउ धम्मु ॥ ३ ॥
[ = हे.३९६·३ ]

[ शपथं कृत्वा कथितं मया तस्य परं सफलं जन्म ।
यस्य न त्यागो न चारभटी न च प्रमुष्टो धर्मः ॥ ]

अच इति किम् । गिलि गिलि राहु मियंकु [१] ॥ अस्तव इति किम् । एक्कहिं अक्खिहिं सावणु [ हे = ३५७·२ ] ॥ अखाविति किम् । सबधु करेप्पिणु [३] ॥ प्रायोऽधिकारात्कचिन्न भवति ।

जइ केवँइ पावीसु पिउ अकिआ कोड्डु करीसुँ ।
पाणिउँ नवइ सरावि जिवँ सव्वंगे पइसीसुँ ॥ ४ ॥
[= हे.३९६·४ ]

[ यदि कथंचित्प्राप्स्यामि प्रियमकृतानि कौतुकानि करिष्यामि ।
पानीयं नवे शरावे यथा सर्वाङ्गे प्रवेक्ष्यामि ॥ ]

---

St. 2. B अम्मीए; MS अम्मिये for अम्मिए. M सुघ, S सुघे; T सुखे for सुघि॑. M हेल्लोहलेण for हल्लोहलेण. M वेअइ for चेअइ. B हल्लोहल्लेन for सुखपारवश्येन. M चिन्त्यतां for चेतयति. St. 3. KS कधिउ for कधिदुं. KS मए for मइँ. KS परु for पर. MS पब्भट्ठउ; T वम्हुट्ठउ for पम्हुट्ठउ. ST शौर्यं for आरभटी. KMS प्रमृष्टो for प्रमुष्टो. KMS गिलु गिलु for गिलि गिलि. KS क्वचिद् भवति for क्वचिन्न भवति. St. 4. M जलकंवळवापीसु for जइ केवँइ पावीसु. KS कुड्डलि करिसु for कोड्डु करीसु. S जव for जिवँ. KS पविसु for पइसीसुँ. B अकृत कौतुक for अकृतानि कौतुकानि. B सर्वाङ्गेण प्रविशामि for सर्वाङ्गे प्रवेक्ष्यामि.

उअ कणिआरु पफुल्लिअउ कंचणकंतिपयासु ।
गोरीवयणविणिज्जिअउ णं सेवइ वणवासु ॥ ५ ॥
[ = हे.३९६.५ ]

[ पश्य कर्णिकारः प्रफुल्लितः काञ्चनकान्तिप्रकाशः ।
गौरीवदनविनिर्जितो ननु सेवते वनवासम् ॥ ]

**तु मो ङ्वम् ॥ ३ ॥**

अपभ्रंशे अचः परः असंयुक्तः अनादौ वर्तमानो मकारो वत्वमापद्यते तु । ङित्वात्सानुनासिकः । कवँलु कमलु । भवँरु भमरु ॥ लाक्षणिकस्यापि । जिवँ । आवँ ॥ तिवँ ॥ अच इत्येव । संमाणेइ लोउ ॥ असंयुक्त इत्येव । तसु पर सभलउँ जम्मु [३] ॥ अखावित्येव । मअणु ॥ ३ ॥

**ह्मो म्हम् ॥ ४ ॥**

अपभ्रंशे ह्म इत्यय मकाराक्रान्तहकारमापद्यते तु । म्ह इति 'श्मष्म-ह्मामस्मरस्मश्मौ म्हः' [ १·४·६७ ] इति प्राकृतलक्षणविहितोऽत्र गृह्यते, संस्कृते तस्यासंभवात् । गिम्हो गिह्मो । बम्हणो बह्मणो ॥ ४ ॥

बम्ह ते॑ विरला के वि नर जे सव्वंगछइल्ल ।
जे वंका ते वंचयर जे उज्जुअ ते॑ बइल्ल ॥ ६ ॥
[ = हे. ४१२·१ ]

[ ब्रह्मंस्ते विरलाः केऽपि नरा ये सर्वाङ्गच्छेकाः ।
ये वक्रास्ते वञ्चकतरा ये ऋजुकास्ते बलीवर्दाः ॥ ]

**रो लुकमधः ॥ ५ ॥**

अपभ्रंशे संयोगस्याधो वर्तमानो रेफो लुकं लोपमाप्नोति तु । पिउ प्रिउ प्रियः ॥ जइ केवँइ पावीसु पिउ [४] ॥ ५ ॥ पक्षे—

---

St. 5. KMS om. उअ and पश्य. 3. KMS तु मो ङ्वः for the Sūtra. S सानुनासिक उच्चारः for सानुनासिकः. MT जांव तांव for आवँ तिवँ. KMS अम्माणेइ । सलाइ for समाणेइ लोउ. T मअवणु for मअणु. 4. KMS हकाराक्रान्त मकारं for मकाराक्रान्तं हकारं. KMS तदसंभवात् for तस्यासभवात्. KMST om. St. 5. 5. MS om. तु K om. पिउ प्रिउ प्रियः.

जइ भग्गा पारक्कडा तो सहि मज्झु प्रिएण ।
अह भग्गा अम्हहंतणा तो तें मारिअडेण ॥ ७ ॥
[ = हे. ३७९.२ ]

[ यदि भग्नाः परकीयास्ततः सखि मम प्रियेण ।
अथ भग्ना अस्मदीयास्ततस्तेन मारितेन ॥ ]

**क्वचिदभूतोऽपि ॥ ६ ॥**

अपभ्रंशे क्वचिदविद्यमानोऽपि रेफो भवति । व्रासु व्यासः ॥ ६ ॥
व्रासु महारिसि एँउँ भणइ जइ सुइसत्थु पमाणु ।
मायहँ चलण नवंताहं दिवे ँ दिवे ँ गंगण्हाणु ॥ ८ ॥
[ = हे.३९९.१ ]

[ व्यासो महर्षिरेतद्भणति यदि श्रुतिशास्त्रं प्रमाणम् ।
मातॄणा चरणौ नमता दिवा दिवा गङ्गास्नानम् ॥ ]

क्वचिदिति किम् । वासेण वि भारहखंभि बद्धु, व्यासेनापि भारत-स्तम्भे बद्धम् । [ = हे. ३९९ ]

**विपदापत्संपदि द इ ॥ ७ ॥**

अपभ्रंशे विपद् आपद् संपद् इत्येतेषा दकारस्य इकारो भवति । विवइ । आवइ । संपइ ॥ प्रायोऽधिकारात् । गुणहिँ न संपय कित्ति पर [४५] ॥७॥

---

St.7.K भट्टा,Sभटा for भग्गा.MS पारकेडा,T परकेरडा for पारक्कडाMS ते for तो. K पिएण for प्रिएण.KS जम्हहतणा for अम्हहतणा.KMS यदि भर्ता परकीयस्ते सखि मैम प्रियेण । अथ भर्तास्मत्संबन्धी तदा तेन मारितेन (S छूरितेन) for the छाया. 6. St. 8. M व्रासमहारिसि for व्रासु महा°. KS सुइसद्दु for सुइसत्थु. KS माएहि चलणे णवहं दिणे दिणे, M मायहे...दिणे दिणे for मायहँ...दिवे दिवे. K व्यासमहर्षिः for व्यासो महर्षि॰. T मातुश्चरणौ for मातॄणां चरणौ. KS दिन दिन; M दिने दिने for दिवा दिवा. KS हारइ खंबि; M हारइ खंहि; T हारहखच्छ for भारहखंभि. K भद्दा; M बद्धा; S भंधा for बद्धु KT बद्धाः for बद्धम्. 7. M इत्येतेषु for इत्येतेषा. T दस्य for दकारस्य. After सपइ K adds विपत्, आपत्, सपत्. KS read here the full stanza: गुणहि न संपअ कित्ति पर फल लिहिआ भुजंति । केसरि ण लहइ बद्दिअ वि गअ ळक्खेहिं घेप्पति ॥ छाया-गुणैर्न संपत् कीर्तिः केवल फलानि लिखितानि भुजते । केसरी न लभते विंशतिकपर्दानपि गजा लक्षैर्गृह्यते.

**कथं यथा तथा डिहडिधडिमडेमास्थादेः ॥ ८ ॥**

अपभ्रंशे कथं यथा तथा इत्येतेषु थादेरवयवस्य इह इध इम एम इत्येते चत्वार आदेशा डितो भवन्ति। किह किध किम केम, कथम्। जिह जिध जिम जेम, यथा। तिह तिध तिम तेम, तथा ॥ ८ ॥

बिंबाहरि तणु रअणवणु किह ठिउ सिरिआणंद।
निरुवमरसु पिएं पिअवि जणु सेसहों दिण्णी मुद्द ॥ ९ ॥
[ = हे.४०१.३ ]

[ बिम्बाधरे तनू रदनव्रणः कथं स्थितः श्रियानन्द।
निरुपमरसं प्रियेण पीत्वेव शेषस्य दत्ता मुद्रा ॥ ]

केम समप्पउ दुट्ठु दिणु किध रअणी छुडु होइ।
णववहुदंसणलालसउ वहइ मणोरह सो इ ॥ १० ॥
[ = हे.४०१.१ ]

[ कथं समाप्यता दुष्टं दिनं कथं रजनी क्षिप्रं भवति।
नववधूदर्शनलालसो वहति मनोरथान्सोऽपि ॥ ]

ओ गोरीमुहणिज्जिअउ वद्दलि लुक्कु मिअंकु।
अन्नु वि जो परिहविअतणु सो किम भमइ निसंकु ॥ ११ ॥
[ = हे.४०१.२ ]

[ अहो गौरीमुखनिर्जितो मेघेषु निलीनो मृगाङ्कः।
अन्योऽपि यः परिभूततनुः स कथं भ्रमति निःशङ्कम् ॥]

---

8. KS om. from किह down to तथा. St. 9. B सिरिअ ंदु; KS सिरिआणादा, M सिरिआणादु for सिरिआणद K पीएव्वि for पिअवि. B मुद्दु; KMS मुद्दा for मुद्द. KMS श्रिया ज्ञातं; T श्रियानंदः for श्रियानन्द. St.10. B रअणी चुडु होइ; KS रजणी जरु होइ, M रजणी जुडु होइ; T रअणी चुडु मोउ for रअणी छुडु होइ. KMS मणोरहसोदु for मणोरह सोइ.B रजनी यदि भवतु; KS जडे भवतु,M जडीभवतु. KMST मनोरथस्रोतः for मनोरथान्सोऽपि. St. 11. M दुद्दिणि; S वंचणि for वद्दलि. M लीणु. for लुक्कु. T वहइ for भमइ. After निसंकु MT add ओ सूचनायाम्.

भण सहि निहुअउँ तेम मइँ जइ पिउ दिट्ठु सदोसु ।
जेम ण जाणइ मज्झु मणु पक्खावडिअं तासु ॥ १२ ॥
[ = हे. ४०१·४ ]

[ भण सखि निभृतं तथा मा यदि प्रियो दृष्टः सदोषः ।
यथा न जानाति मम मनः पक्षपाति तस्य ॥ ]

जिम जिम वंकिम लोअणहं णिरु सावँलि सिक्खेइ ।
तिम तिम वम्महु णिअअ सर खरपत्थरि तिक्खेइ ॥ १३ ॥
[ = हे. ३४४·१ ]

[ यथा यथा वक्रिमाणं लोचनयोर्नितरा श्यामला शिक्षते ।
तथा तथा मन्मथो निजाञ्शरान्खरप्रस्तरे तीक्ष्णयति ॥ ]

मइँ जाणिउँ पिअविरहिअहं क वि धर होइ विआलि ।
णवर मिअंकु वि तिह तवइ जिह दिणयरु खयगालि ॥ १४ ॥
[ = हे. ४०१·५ ]

[ मया ज्ञातं प्रियविरहिताना कापि धरा भवति विकाले ।
केवलं मृगाङ्कोऽपि तथा तपति यथा दिनकरः क्षयकाले ॥ ]

एवं जिधतिधौ उदाहार्यौ ॥

**दादेर्डेहो यादृक्तादृकीदृगीदृशाम् ॥ ९ ॥**

अपभ्रंशे यादृगादीना दादेरवयवस्य डित् एह इत्यादेशो भवति । सर्वत्र डित्त्वाट्टिलोपः ॥ ९ ॥

---

St. 12. K भणु सह णिभुजं for भण सहि णिहुअउँ. S जामइ for जाणइ. KS पक्खावडिअदुः M पक्खावडिअउ; T पक्खापडिअउ for पक्खावडिअं. KS तासा; M तसु for तासु. K तथा मया यदि for तथा मां यदि. KM पक्षपातीतं; T पक्षपातित. St. 13. KS वंकिमु for वंकिम. KS णिअर for णिरु. KS संखेइ for सिक्खेइ. B सरा for सर. KS श्यामलापि संक्षयति for श्यामला शिक्षते. St. 14. BKMS read line 1 as line 2 and line 2 as line 1 in the text and also in the छाया. KS मए for मइँ. KM खअकालि; S खअकारि for खअगालि. K प्रियविरहिणीनां for °विरहिताना. BKS अपराह्ने. KS after correction विकाले. 9. M °दृशाः for °दृशाम् in the Sūtra, KMS om. सर्वत्र डित्त्वाट्टिलोपः.

मइँ भणिअउ बलिराउ तुहुँ केहउ मग्गणु एहु ।
जेहु तेहु नवि होइ वढ सइँ नारायणु एहु ॥ १५ ॥
[ = हे. ४०२·१ ]

[ मया भणितो बलिराज त्वं, कीदृङ् मार्गण ईदृक् ।
यादृक्तादृङ् न भवति मूढ स्वयं नारायण एषः ॥ ]

**डइसोऽताम् ॥ १० ॥**

अपभ्रंशे यादृशादीनामकारान्ताना यादृश तादृश कीदृश ईदृश इति रूपाणा दादेरवयवस्य डित् अइस इत्यादेशो भवति । जइसु । तइसु । कइसु । अइसु ॥ १० ॥

**यावत्तावत्युंमहिंमा वादेः ॥ ११ ॥**

अपभ्रंशे यावत् तावत् इत्यव्यययोर्वकारादेरवयवस्य उं महिं म इति त्रय आदेशा भवन्ति ॥ ११ ॥

तिलहँ तिलत्तणु ताउँ पर जाउँ न नेह गलन्ति ।
नेहि पणट्ठइ ते ज्जि तिल तिल फिट्टवि खल होन्ति ॥ १६ ॥
[ = हे. ४०६·२ ]

[ तिलाना तिलत्वं तावत्परं यावन्न स्नेहा गलन्ति ।
स्नेहे प्रनष्टे त एव तिलास्तिला भ्रष्ट्वा खला भवन्ति ॥ ]

जामहिँ विसमी कज्जगइ जीवहँ मज्झे एइ ।
तामहिँ अच्छउ इयरु जणु सुयणु वि अंतरु देइ ॥ १७ ॥
[ = हे. ४०६·३ ]

St.15.K बलिराज for बलिराउ. K केहुउ;S केहुओ for केहउ. KS भण्यते for भणितो. 10. KS यादृगादीनां for यादृशादीनां. KMST जइसो तइसो कइसो अइसो for जइसु etc. St. 16. KS तिलाहं for तिलहं. S गअंति for गलति. KMS तिल पिट्ठवि; T तिल विट्टा for तिल फिट्टवि. KS तिलास्तिलपिष्टवद् भ्रष्टा भवंति. T तिलभ्रष्टाः for तिला भ्रष्ट्वा. 11. M has been damaged from this Sūtra onwards and hence variants are noted wherever possible. St.17. T कम्मगइ for कज्जगइ. KS जीवहं मज्झं for मज्झे. KS इअरजणु for इअरु जणु. KS सुजणु जिं for सुअणु वि. KST इतरजनः, सुजन एवांतरं ददाति for इतरो जनः, सुजनोऽपि अन्तरं ददाति.

[ यावद्विषमा कार्यगतिर्जीवाना मध्ये एति ।
तावदास्तामितरो जनः, सुजनोऽप्यन्तरं ददाति ॥ ]

जाम न निवडइ कुभअडि सीहचवेडचडक्क ।
ताम समत्तहँ मयगलहं पइ पइ वज्जइ ढक्क ॥ १८ ॥
[ =हे. ४०६·१ ]

[ यावन्न निपतति कुम्भतटे सिंहचपेटाढ्ढाघातः ।
तावत्समस्ताना मदकलानां पदे पदे वाद्यते ढक्का ॥ ]

**डेत्तुलडेवडावियत्कियति च व्यादेर्वतुपः ॥ १२ ॥**

इयत्कियदित्येतयोश्चकाराद्यावत्तावतोश्च परिमाणार्थे विहितो यो वतुप्प्रत्ययः तस्य व्यादेर्वकारादेर्यकारादेश्चावयवस्य एत्तुल एवड इत्यादेशौ डिनौ भवतः । एत्तुलो । केत्तुलो । एवडो । केवडो ॥ १२ ॥

जेवडु अतरु पट्टणगामहं तेवडु अंतरु रावणरामहं ॥ १९ ॥
[= हे. ४०७·१ ]

[ यावदन्तरं पत्तनग्रामयोः, तावदन्तरं रावणरामयोः ॥ ]

**डेत्तहे त्रलः ॥ १३ ॥**

अपभ्रंशे सर्वादेः सप्तम्यर्थे त्रल्प्रत्ययस्य डित् एत्तहे इत्यादेशो भवति । जेत्तहे । तेत्तहे ॥ १३ ॥

जेत्तहेँ तेत्तहेँ वारि घरि लच्छि विसंठुल धाइ ।
पिअपब्भट्ठ व गोरडी णिच्चल काहिँ वि ण ठाइ ॥ १९ ॥
[ = हे. ४३६·१ ]

[ यत्र तत्र द्वारे गृहे लक्ष्मीर्विसंष्ठुला धावति ।
प्रियप्रभ्रष्टेव गौरी निश्चला कुत्रापि न तिष्ठति ॥ ]

---

St. 18. KS °चवेडा ढक्का for °चवेडचडक्क. KM समत्थाणं मदकलाण for समत्तहं मयगलहं. KST °चपेटा ढढपातः for °चपेटा ढढाघातः. 12. After केवडो KS add जेवडो तेवडो. St. 19. All Mss. read जेवडु अंतरु रावणराहवहं तेवडु अंतरु पट्टणगावहं. KS रावणराघवयोः for रावणरामयोः. 13. St. 19. KS थाइ for धाइ. KS पब्भट्टेव for पब्भट्ठ व. KS कांता for गौरी.

**यत्तदोर्डेत्तु ॥ १४ ॥**

त्रल् इत्यनुवर्तते । यत् तत् आभ्या परस्य त्रल्प्रत्ययस्य डित् एत्तु इत्ययमादेशो भवति । जेत्तु ठिदो, यत्र स्थितः। तेत्तु ठिदो, तत्र स्थितः ॥१४॥

**कुत्रात्रे च डेत्थु ॥ १५ ॥**

अपभ्रंशे कुत्र अत्र इत्येतयोः स्थितस्य चकारात् यत्तदोः परस्य त्रल्प्रत्ययस्य डित् एत्थु इत्यादेशो भवति। केत्थु । एत्थु । जेत्थु । तेत्थु ॥१५॥

जइ सो घडिदि प्रयावदी केत्थु वि लेप्पिणु सिक्खु ।
जेत्थु वि तेत्थु वि एत्थु जगि भण तो तहि सरिक्खु ॥ २० ॥
[ = हे. ४०४·१ ]

[ यदि स घटयति प्रजापतिः कुत्रापि लात्वा शिक्षाम्।
यत्रापि तत्राप्यत्र जगति भण तर्हि तस्याः सदृक्षः ॥ ]

**त्वतलौ प्पणम् ॥ १६ ॥**

अपभ्रंशे भावेऽर्थे विहितौ त्वतल्प्रत्ययौ प्पण इत्यादेशमापद्येते । पडुप्पणं पटुत्वं पटुता वा । सुक्कप्पणं, शुक्लत्वं शुक्लता वा ॥ १६ ॥

साहु वि लोउ तडप्फडइ वड्डप्पणहों तणेण ।
वड्डप्पणु परि पाविअइ हत्थिं मोक्कलडेण ॥ २१ ॥
[ = हे. ३६६·१ ]

[ सर्वोऽपि लोकः उत्ताम्यति बृहत्त्वस्यार्थे ।
बृहत्त्वं परं प्राप्यते हस्तेन मुक्तेन ॥ ]

तडप्फडइ इति तु औत्सुक्ये शब्दानुकरणे देशी धातुः ॥

---

14. KS अपभ्रंशे यत्तभ्यां परस्य for यत् तत् आभ्या परस्य. K तेत्त for तेत्तु. 15. After तेत्थु K adds Sk. equivalents कुत्र अत्र. St. 20. K पडइ for घडिदि. K पआवई for प्रयावदी. K जइ for जगि. KS सहि for तहि. KMST सादृश्यं for सदृक्षः. 16. K om. अपभ्रंशे. St. 21. B वड्डत्तणहो for वड्डप्पणहो. S om. वड्डपणहों तणेण. S पर for परि. KS हत्थेण मुक्कलडेण for हत्थें मोक्कलडेण. KS सर्वोपि लोकस्तडप्रडायते महत्त्वस्य तादर्थ्येन (S तावदर्थेन). KS महता परं प्राप्यते. KM तडफड इत्यौत्सुक्ये for तडप्फड इति तु औत्सुक्ये. B शब्दानुशासने for शब्दानुकरणे. B देशीयात्; K देश्ये धातुः; S देश्यो धातुः for देशी धातुः.

**तव्यस्य एव्वइएव्वउएव्वाः ॥ १७ ॥**

अपभ्रंशे तव्यप्रत्ययस्य एव्वइ एव्वउ एव्व इति त्रय आदेशा भवन्ति । जेव्वइ जेव्वउ जेव्व, जेतव्यः ॥ १७ ॥

एउँ गृण्हेप्पिणु ध्रुं मइ जइ प्रिउ उव्वारिज्जइ ।
महु करिएव्वउँ किं पि न वि मरिएव्वउँ पर देज्जइ ॥ २२ ॥
[ = हे. ४३८·१ ]

[ एतद् गृहीत्वा यन्मया यदि प्रिय उद्वार्यते ।
मम कर्तव्यं किमपि नापि मर्तव्यं परं दीयते ॥ ]

देसुच्चाडणु सिहिकढणु घणकुट्टणु जं लोइ ।
मंजिट्ठऍ अइरत्तिए सव्वु सहेव्वउँ होइ ॥ २३ ॥
[ = हे. ४३८·२ ]

[ देशोच्चाटनं शिखिकथनं घनकुट्टनं यल्लोके ।
मञ्जिष्ठयातिरक्तया सर्वं सोढव्यं भवति ॥ ]

सोएव्वा पर वारिआ पुप्फवईहिँ समाणु ।
जग्गेव्वा पुणु को धरइ जइ सो वेउ पमाणु ॥ २४ ॥
[ = हे. ४३८·३ ]

[ स्वपितव्यं परं वारितं पुष्पवतीभिः समम् ।
जागर्तव्यं पुनः को धरति यदि स वेदः प्रमाणम् ॥ ]

---

17. St. 22. KS एम गृहेप्पिणु जं मइ पिअ उव्वारिज्जइ । सबध करेव्विणु किं पि णइ वरि ( S मरि ) एव्वइ पर दिज्जइ. After उद्वार्यते KS add निषिध्यते. KS शपथं कृत्वा किमपि नास्ति for मम कर्तव्यं किमपि नास्ति. St. 23. K मंजिट्ठाए, S मंजट्ठाए for मंजिट्ठऍ. K अइरित्तिण; S अइरिंतिण for अइरत्तिए. KS घनकूटनं for घनकुट्टनं. KS अतिरिक्तया for अतिरक्तया. St. 24. B सोएव्व; K सोएव्वं for सोएव्वा. KST परि for पर. B जग्गेव्व for जग्गेव्वा. S दरइ for धरइ. KS वेदु for वेउ. K सुप्तव्यं; S स्वप्तव्यं for स्वपितव्य. K जागरितव्यं for जागर्तव्यं.

क्त्व इ इउ इवि अवि ॥ १८ ॥

अपभ्रंशे क्त्वाप्रत्ययस्य इ इउ इवि अवि इति चत्वार आदेशा भवन्ति। करइ, करिउ, करिवि, करवि, कृत्वा ॥ १८ ॥

इ—

हिअडा जइ वेरिअ घणा तो किं अब्भि चडाहुं ।
अम्हहं बे हत्थडा जइ पुणु मारि मराहुं ॥ २५ ॥
[ = हे. ४३९.१ ]

[ हृदय यदि वैरिणो धनास्तत्किमभ्रे आरोहामः ।
अस्माकं द्वौ हस्तौ यदि पुनर्मारयित्वा म्रियामहे ॥ ]

इउ—

अम्मि पओहर वज्जमा निच्चु जें संमुह ठन्ति ।
मह्रु थक्कहों समरंगणि गयघड भंजिउ जन्ति ॥ २६ ॥
[ = हे. ३९५.५ ]

[ मातः पयोधरौ वज्रमयौ नित्यं यौ संमुखं तिष्ठतः ।
मम स्थितस्य समराङ्गणे गजघटा भक्त्वा यान्ति ॥

इवि—

रक्खइ सा विसहारिणी बे कर चुंबिवि जीउ ।
पडिबिम्बिअमुंजालु जलु जेहिँ अडोहिउँ पीउँ ॥ २७ ॥
[ = हे. ४३९.२ ]

---

18. KS इपि अपि for इवि अवि in the Sūtra, Com. and illustrations. K करइपि करअपि for करिवि करवि. St.25. S हिअड for हिअडा. K महि चडाहहुं; S तुहि जहाहुं for अब्भि चडाहुं. KS अम्हहं पि for अम्हहं. KS तदा किमत्रेमारोहामा for तत्किमभ्रे आरोहामः. St. 26. K अम्हि पअउहर चज्जवा णिच्चं for अम्मि पओहर वज्जमा निच्चु. K महु कंतासा समरंगणइ for मह्रु थक्कहों समरंगणि. KS भंजिदु for भंजिउ. K साहसिनौ for वज्रमयौ. KMST कातस्य for स्थितस्य. St. 27. S विसहारिण for विसहारिणी. KS ते करजुप्पि जिउ for बे कर चुंबिवि जीउ. KMS जेहिमालोडिवि पिउ for जेहिँ अडोहिउँ पीउँ. K विषधारिणी तौ करौ for विषहारिणी द्वौ करौ. KMS याभ्यामालोड्य पीतम् for याभ्यामनवगाह्य पीतम्.

[ रक्षति सा विषहारिणी द्वौ करौ चुम्बित्वा जीवम् ।
प्रतिबिम्बितमुञ्जालं जलं याभ्यामनवगाह्य पीतम् ॥ ]

अवि—

बाह विछोडवि जाहि तुहुँ हउँ तेवँइ को दोसु ।
हिअअट्ठिउ जइ नीसरहि जाणउँ मुंज सरोसु ॥ २८ ॥
[ = हे. ४३९.३ ]

[ बाहू विच्छोड्य यासि त्वं भवतु तथा को दोषः ।
हृदयस्थितो यदि निःसरसि जानामि मुञ्ज सरोषः ॥ ]

एप्प्येप्पिण्वेव्येविणु ॥ १९ ॥

अपभ्रंशे क्त्वाप्रत्ययस्य एप्पि एप्पिणु एवि एविणु इति चत्वार आदेशा भवन्ति । करेप्पि करेप्पिणु करेवि करेविणु, कृत्वा ॥ १९ ॥

जेप्पि असेसु कसाअबलु देप्पिणु अभउँ जअस्सु ।
लेवि महव्वअ सिवु लहहिं झाएविणु तत्तस्सु ॥ २९ ॥
[ = हे. ४४०.१ ]

[ जित्वाशेषं कषायबलं दत्वाभयं जगतः ।
लात्वा महाव्रतानि शिवं लभन्ते ध्यात्वा तत्त्वम् ॥ ]

पृथग्योग उत्तरार्थः ॥

---

St. 28. KS बाह विछोडपि जाहिउ तुहं भमंतू मइ को दोसु. K हिअइ ट्ठिउ for हिअअट्ठिउ. KMS मुंचसु रोसु for मुज सरोसु. KS बाहू विछोडय यासि त्वं भ्रमन् तदा मयि को दोषः. KS. हृदये स्थितः for हृदयस्थितः. KS मुंच रोषं for मुञ्ज सरोषः. 19. BKMS एपि एपिणु for एपि एविणु in the Sūtra, Com. and illustrations. BK करएप्पि करएपिणु करएपि करएपिणु for करेप्पि...करेविणु. St. 29. KS अहउ for अभउँ.* KMS लेपि for लेवि. KS झोपिणु for झाएविणु. K लभस्व for लात्वा.

**तुम एवमणाणहमणहिं च ॥ २० ॥**

अपभ्रंशे तुमुन्प्रत्ययस्य एवं अण अणहं अणहिं इत्येते चत्वारः, चकारात् एप्पि एप्पिणु एवि एविणु इत्येते च चत्वारः, एवमष्टादेशा भवन्ति । करेवं करण करणहं करणहिं करेप्पि करेप्पिणु करेवि करेविणु, कर्तुम् ॥ २० ॥

देवं दुक्करु निअअधणु करण न तउ पडिहाइ ।
एमइ सुहुं भुंजणहँ मणु पर भुंजणहिँ न जाइ ॥ ३० ॥
[ = हे. ४४१·१ ]

[ दातुं दुष्करं निजकधनं कर्तुं न तपः प्रतिभाति ।
एवमेव सुखं भोक्तुं मनः परं भोक्तुं न याति ॥ ]

जेप्पि चएप्पिणु सअल धर लेविणु तउ पालेवि ।
विणु संतें तित्थेसरेंण को सक्कइ भुवणे वि ॥ ३१ ॥
[ = हे. ४४१·२ ]

[ जेतुं त्यक्तुं सकला धरा लातुं तपः पालयितुम् ।
विना शान्तिना तीर्थेश्वरेण कः शक्नोति भुवनेऽपि ॥ ]

**गमेस्त्वेप्येपिण्वोरेलुक् ॥ २१ ॥**

अपभ्रंशे गमेर्धातोः परयोः एप्पि एप्पिणु इत्यादेशयोरेकारस्य लुग्भवति तु । गंपि गंपिणु गमेप्पि गमेप्पिणु, गत्वा ॥ २१ ॥

---

20. KMST तुमः प्रत्ययस्य for तुमुन्प्रत्ययस्य. KS एपि एपिणु for एवि एविणु. K करएवं करअण करअणहं करअणहिं करएपि करएप्पि करएप्पिणु करएपिणु for करेवं...करेविणु. St.30. K णिअधणु for णिअअधणु. K पडिभाइ for पडिहाइ. K एव for एमइ. K निजधनं for निजकधनं. KMST भोक्तुमनाः for भोक्तुं. St. 31. KS धरं for धर. KS पालेपि for पालेवि. KS विउसंतितित्थेसरें; M विणु संते तित्थेसरें for विणु संतें तित्थेसरेंण. KS हुवणे for भुवणे. K परिपालयितुं for पालयितुम्. KMST शांतेन for शान्तिना.

गंपिणु वाणारसिहि नर अह उज्जेणिहि गंपि ।
मुअ पप्पुवन्ति परम पउ दिव्वंतरइँ म जंपि ॥ ३२ ॥
[ = हे. ४४२.१ ]

[ गत्वा वाराणस्या नरा अथ उज्जयिन्या गत्वा ।
मृताः प्राप्नुवन्ति परमं पदं दिव्यान्तराणि मा जल्प ॥ ]

पक्षे

गंग गमेप्पिणु जो मरइ जो सिवतित्थु गमेप्पि ।
कीडदि तिदसावासगउ सअलउ लोउ जएप्पि ॥ ३३ ॥
[ = हे. ४४२.२ ]

[ गङ्गा गत्वा यो म्रियते यः शिवतीर्थं गत्वा ।
क्रीडति त्रिदशावासगतः सकलं लोकं जित्वा ॥ ]

**तृनो णअऌ** ॥ २२ ॥

अपभ्रंशे तृनः प्रत्ययस्य लित् णअ इत्यादेशो भवति । होणउ भविता । सुणउ श्रोता ॥ २२ ॥

[ हत्थि मारणउ लोउ बोल्लणउ ।
पडहु वज्जणउ सुणउ भसणउ ॥ ३४ ॥
[ = हे. ४४३.१ ]

[ हस्ती मारयिता लोकः कथयिता ।
पटहो वादयिता शुनको भषिता ॥ ]

---

21. St. 32. KS मुअ पावइ परमु पउ for मुअ पप्पुवंति परम पउ. BKS दिव्वतरइ न जंपि for दिव्वतर इँम जंपि. KMS दिव्यंतरेण यदपि for दिव्यान्तराणि मा जल्प. St. 33. S मुअइ for मरइ. KS कीलदि for कीडदि. B सो जएप्पि; KS सो जमलोउ जणेप्पि for सअलउ लोउ जएप्पि. B सोऽद्य लोक जित्वा; KMS स यमलोकं जित्वा for सकलं लोकं जित्वा. 22. KS तृणो णल्; M तृनो णल् for the Sūtra. KMS अण for णअ. St. 34. K पटहु for पडहु. K मारणशीलः भाषणशीलः वादनशीलः भषणशीलः for मारयिता कथयिता वादयिता भषिता.

**ङस्य युष्मदादेर्डारः ॥ २३ ॥**

अपभ्रंशे युष्मदादिभ्यः परस्य ङस्य डित् आर इत्यादेशो भवति। तुम्हारु युष्मदीयः। अम्हारु अस्मदीयः ॥ २३ ॥

संदेसें काइँ तुम्हारेण जं संगहों न मिलिज्जइ।
सुविणंतरि पिएँ पाणिएँग पिअ पिवास किं छिज्जइ ॥ ३५ ॥
[ = हे. ४३४·१ ]

[ संदेशेन किं त्वदीयेन यत्संगस्य न मिल्यते।
स्वप्नान्तरे पीतेन पानीयेन प्रिय पिपासा किं छिद्यते ॥ ]

दिक्खि अम्हारा कंतु। बहिणि अम्हारा कंतु [११९] ॥

**जणि जणु नं नइ नावइ नाइ इवार्थे ॥ २४ ॥**

अपभ्रंशे इवार्थे जणि जणु नं नइ नावइ नाइ इति षडादेशा भवन्ति। चंदु जणि, चंदु जणु, चंदु नं, चंदु नइ, चदु नावइ, चंदु नाइ, चन्द्र इव ॥ २४ ॥

जणि—

चंपअकुंपलमज्झि सहि भसलु पइट्ठउ।
सोहइ इंदनील जणि कणइ उविट्ठउ ॥ ३६ ॥
[ = हे. ४४४.४ ]

---

23. St.35. KS संदेशइ ताइ; M भणिए काइं for संदेसें कॉइ. KS सुवणंतरि for सुविणंतरि. B पिआस; KMS पिआसा for पिवास. KS om. प्रिय in the छाया. KS देक्खि; M दिट्ठ for दिक्खि. After कतु K adds छाया as दृष्टोऽस्मदीयः कान्त.. 24. M om. नाइ in the Sūtra. St. 36. B चंपअकुभमज्झि; KM चंपहकुसुमहो मज्झि; S जंपहकुसुमहो मज्झि for चंपअकुपलमज्झि. K पहट्ठइ for पइट्ठउ. KMS इंदुणीलु for इंदणीलु. K कणइ बइट्ठउ. M कणइ उपइट्ठउ for कणइ उविट्ठउ. KS उपरिष्ठः for उपविष्टः.

[ चम्पककुड्मलमध्ये सखि भ्रमरः प्रविष्टः ।
शोभते इन्द्रनील इव कनके उपविष्टः ॥ ]

जणु—

निरुवमरसु पिएं पिअवि जणु [ ९ ] ॥ प्रागेव व्याख्यातम् ॥

नं—

मुहकबरिबंध तहें सोह धरहिँ
नं मल्लजुज्झु ससिराहु करहिँ ।
तहेँ सोहहिँ कुरल भमरउलतुलिअ
नं तिमिरडिंभ खेल्लंति मिलिअ ॥३७॥

[ = हे. ३८२·१ ]

[ मुखकबरीबन्धौ तस्या. शोभा धरतः
इव मल्लयुद्धं शशिराहू कुरुतः ।
तस्याः शोभन्ते कुरला भ्रमरकुलतुलिता
इव तिमिरडिम्भाः क्रीडन्ति मिलित्वा ॥ ]

नइ—

रविअत्थमणसमाउलेँण कंठट्ठिअउ ण छिण्णु ।
चक्कें खंडु मुणालिअहि नइ जीवग्गलु दिन्नु ॥ ३८ ॥

[ = हे. ४४४·१ ]

[ रव्यस्तमनसमाकुलेन कण्ठस्थितो न च्छिन्नः ।
चक्रेण खण्डो मृणालिकाया इव जीवार्गलो दत्तः ॥ ]

---

K पिएवि for पिअवि St. 37. KS णहे for तहे. KS धरइ for धरहिँ. KS सहइहि for सोहइ. KS कुरुल for कुरल. KS भवँवहुलअ for भमरउलतुलिअ KMS खेलति for खेल्लंति. KS तस्या राजंति कुंतलानीव for तस्याः शोभन्ते कुरला॰. KM मिलिताः for मिलित्वा. St. 38. KS रविअत्तमअसमाइलेइ for रविअत्थमणसमाउलेण. KS कंडिट्ठिउ for कंठट्ठिअउ. KS णिच्छिण्णु (Corr. to णं छिण्णु) for ण च्छिण्णु. KS चक्केण for चक्कें. K कंठे स्थितः for कण्ठस्थितः.

नावइ—

पेक्खेविणु मुहुँ जिणवरहं दीहरणअणसलोणु ।
नावइ गरुमच्छरभरिउँ जलणि पवेसइ लोणु ॥ ३९ ॥
[ दृष्ट्वा मुखं जिनवराणा दीर्घनयनसलावण्यम् ।
इव गुरुमत्सरभरितं ज्वलने प्रविशति लवणम् ॥ ]

नाइ—

वलआवलिनिवडणभएँण धण उद्धब्भुअ जाइ ।
वल्लभविरहमहादहहु गाह गवेसइ नाइ ॥ ४० ॥
[ = हे. ४४४.२ ]
[ वलयावलीनिपतनभयेन धन्या ऊर्ध्वभुजा याति ।
वल्लभविरहमहाह्रदस्य गाधत्वमन्विष्यतीव ॥ ]

**तणेण रेसिं रेसि तेहिं केहिं तादर्थ्ये॥ २५ ॥**

अपभ्रंशे तादर्थ्ये द्योत्ये तणेण रेसिं रेसि तेहि केहिं इति पञ्च निपाताः प्रयोक्तव्याः । रामतणेण रामरेसिं रामरेसि रामतेहिं रामकेहि णमोक्कारो, रामार्थं नमस्कारः ॥ २५ ॥

ढोल्ला एँह परिहासडी अइ भण कवणइ देसि।
हउँ झिज्जउँ तउकेहिँ पिअ तुहुँ पुणु अन्नहिरेसि ॥ ४१ ॥
[ = हे. ४२५.१ ]

---

St.39. B पेक्खीविणु; KS पेक्खेप्पिणु; M देविणु for पक्खेविणु. B अदीरहघण सलोणु; KS डीहरनअनसलोणु; M दीहरअणसलोणु for द्रीहरणअणसलोणु. K गुरुमच्छरहरिउ for गरुमच्छरभरिउँ. K पविसइ for पवेसइ. B अदीर्घघनसलावण्यं; K MS दर्घिनयनस्थलावण्यं for दीर्घनयनसलावण्यम्. KMS लावण्यं for लवणम्. St. 40. KMS धण्णा for धण. KS उद्धहुअ for उद्धब्भुअ. B वल्लहधूमह अस्स. KS वल्लहु for वल्लह°. KMS °महद्दहओ for °महादहहु. B गाहप्पण for गाह. B वल्लभधूमादस्य. KMS गाधं for गाधत्वं. B गवेषयत इव for अन्विष्यतीव. 25. B तेसिं तेसि for रेसिं रेसि in the Sūtra, Com. and illustrations. M om. द्योत्ये. n Com. St. 41. KS एस for एह. KMS अननकणहे देहि. KS झिज्जउ हउं for हउँ झिज्जउँ. B एतां परिहासिकामयि भण कस्मै न ददासि; KM एतां परिहासिकां न न कस्यै ददासि for एष परिहासः अयि भण कस्मिन्देशे. K क्षीये अहं तवार्थे प्रिय.

[ विट एष परिहासः अयि भण कस्मिन्देशे ।
अहं क्षीये तवार्थे प्रिय त्वं पुनरन्यस्या अर्थे ॥ ]

वड्डप्पणहो तणेण [ २१ ] ॥ एवं रेहिरेसिमावुदाहार्यौ ॥

**स्वार्थे डुः पुनर्विनाध्रुवमः ॥ २६ ॥**

अपभ्रंशे पुनः विना ध्रुवम् इत्येतेभ्यः परः स्वार्थे डित् उप्रत्ययो भवति । पुणु होइ, पुनर्भवति । पावु विणु, पापं विना । ध्रुवु जम्मु, ध्रुवं जन्म ॥ २६ ॥

सुमरिज्जइ तं वल्लहउँ जं वीसरइ मणाउँ ।
जहिँ पुणु सुमरणु जाउँ गउँ तहोँ णेहहोँ किं णाउँ ॥ ४२ ॥
[ = हे. ४२६·१ ]

[ स्मर्यते तद्वल्लभं यद्विस्मरति मनाक् ।
यस्य पुनः स्मरणं जातं गतं तस्य स्नेहस्य किं नाम ॥ ]

चंचलु जीविउँ ध्रुवु मरणु पिअ रूसिज्जइ काइं ।
होसहिँ दिअहा रूसणा दिव्वइँ वरिससयाइं ॥ ४३ ॥
[ = हे. ४१८·३ ]

[ चञ्चलं जीवितं ध्रुवं मरणं प्रिय रुष्यते कथम् ।
भविष्यन्ति दिवसा रूषणा दिव्यानि वर्षशतानि ॥ ]

**डेंडाववश्यमः ॥ २७ ॥**

स्वार्थ इत्यनुवर्तते । अपभ्रंशे अवश्यमः परौ एं अ इत्येतौ डितौ प्रत्ययौ भवतः । अवसें, अवस, अवश्यम् ॥ २७ ॥

---

26. KST om. पुणु होइ down to ध्रुव जन्म. St. 42. KMS सु वल्लहउ for त वल्लहउँ. K गदु णेहहो कयिं नाम for गउँ तहोँ णेहहोँ किं णाउँ. KMS यस्मिन्पुनः स्मरण यावद्गत for यस्य पुनः स्मरणं जातं गतं. After किं नाम KMS add विणु.जुज्झेण लोहु. St. 43. KS ध्रुउ for ध्रुवु. KMS रोषयोग्याः for रूषणा.. 27. M डेमडाववश्यमः for the Sūtra. M एम अ; M एं आ for एं अ. KS om. स्वार्थ इत्यनुवर्तते. K आवासें । आवास अवश्यं for अवसें... अवश्यम्. S om. अवसें... श्यम्.

जिब्भिंदिउ नायउँ वसि करहुँ जसु अधिन्नइँ अन्नइँ ।
मूलि विणट्ठइ तुंबिणिहे अवसें सुक्कहिँ पण्णइं ॥ ४४ ॥
[=हे॰ ४२७·१ ]

[ जिह्वेन्द्रियं नायकं वशे कुरुत यस्य अधीनान्यन्यानि ।
मूले विनष्टे तुम्बिन्या अवश्यं शुष्यन्ति पर्णानि ॥ ]

अवस न सुअहिँ सुहच्छिअइ [ १४० ] ॥

**परमेक्कशसोर्डडि ॥ २८ ॥**

अपभ्रंशे परम् एकशम् इत्याभ्या परौ स्वार्थे डितौ अ इ इत्येतौ यथा-संख्यं भवतः । पर परम् । एक्कसि एकशः ॥ २८ ॥

गुणहिँ न संपइ कित्ति पर फल लिहिआ भुंजंति ।
केसरि लहइ न बोड्डिअ वि गय लक्खेँहिँ घेप्पन्ति ॥ ४५ ॥
[ = हे. ३३५·१ ]

[ गुणैर्न संपत्कीर्तिः परं फलानि लिखितानि भुञ्जन्ति ।
केसरी न लभते कपर्दिकामपि गजा लक्षैर्गृह्यन्ते ॥ ]

एक्कसि सीलकलंकिअह देज्जहिँ पच्छित्ताइं ।
जो पुणु खंडइ अणुदिअहु तसु पच्छित्ते काइं ॥ ४६ ॥
[ = हे. ४२८·१ ]

---

St. 44. KS जिम्हिदिउ for जिब्भिदिउ. T वहु करहु for वसिकरहुँ. S करहि for करहुँ KMS अंगाइ for अन्नाइ. S वगट्ठइ for विणट्ठइ. KS सुक्खह वण्णाइं, MT सुक्खहिं वण्णाइं for सुक्कहिँ पण्णइं. KMS अंगानि for अन्यानि. KS सुअइहिं, M सुइहिं for सुअहिँ. KMS सुइच्छिअहि for सुइच्छिअइ. After °च्छिअइ KMS add अवश्यं न स्वपन्ति. 28. KMS इत्येताभ्या for इत्याभ्यां. KS om. पर एक्कसि. St. 45. KS गुणेहिँ for गुणहिँ. K संपिअ; S संपेअ for संपइ. K ओड्डिअ; M बोंदिअ, S ओंडिअ; T पोड्डिअ for बोड्डिअ. KS लक्खइ for लक्खेहिँ. KS भुंजते for भुञ्जन्ति. KMS कपर्दिकविंशतिमपि T विंशति-कपर्दानपि for कपर्दिकामपि. St 46. KS दिज्जहिं पच्छिइ ताव; M दिज्जहि पच्छितावइ for देज्जहिँ पच्छिताइं. KS तसु पइतावें काइ for तसु

[ एकशः शीलकलङ्किनाना दीयन्ते प्रायश्चित्तानि ।
यः पुनः खण्डयत्यनुदिवसं तस्य प्रायश्चित्तेन किम् ॥ ]

**अडडडुल्लाः स्वार्थिककलुक् च ॥ २९ ॥**

अपभ्रंशे नामतः परतः अ इति, अअ उल्ल इत्येतौ च डितौ प्रत्ययौ भवतः, तत्संनियोगेन स्वार्थिकस्य कप्रत्ययस्य लोपश्च । बलउ, बलडु, बलुल्लु, बलम् ॥ २९ ॥

विरहाणलजालकरालिअउ पहिउ पंथि जं दिट्ठउ ।
तं मेलवि सव्वहिँ पंथिअहिँ सो जि किअउ अग्गिट्ठउ ॥ ४७ ॥
[ = हे. ४२९.१ ]

[ विरहानलज्वालाकरालितः पथिकः पथि यदा दृष्टः ।
तदा मिलित्वा सर्वैः पथिकैः स एव कृतोऽग्निष्ठः ॥ ]

महु कंतहु बे दोसडा हेल्लि म जंपहि आलु ।
देंतहों हउँ पर उव्वरिअ जुज्झंतहों करवालु ॥ ४८ ॥
[ = हे. ३७९.१ ]

[ मम कान्तस्य द्वौ दोषौ हे सखि मा जल्प मिथ्या ।
ददतोऽहं परमुर्वरिता युध्यमानस्य करवालः ॥ ]

एक्क कुडुल्ली पंचहिँ रुद्धी [ ७६ ] ॥

---

पच्छित्तें काइं. KMS पश्चात्तापा दीयते for दीयन्ते प्रायश्चित्तानि. KMST तस्य पश्चात्तापेन किं for तस्य प्रायश्चित्तेन किम्. 29. KMS नाम्नः for नामतः. T भवंति for भवतः. KMS om. बलउ... बलम्. St. 47. K पथि पंथअ जो दिट्ठउ; M पथि पथिअ अदिट्ठइ; S पथि पथअ जा दिट्ठउ for पहिउ पथि जं दिट्ठउ. K तनोश्चवि; M तं तमोलवि; S तमोच्चवि; T तममेल्लवि for तं मेल्लवि. KS पंथअहिं for पथिअहिं. KMS सो वि अ कउ अग्गिट्ठउ. KMST तं मुत्त्वा सर्वैः पान्थैः for तदा मिलित्वा सर्वैः पथिकैः. M निष्ठः; S निघ्नः; T अग्निष्ठकः for अग्निष्ठः. St. 48. KS कांतहो for कंतहु. KS दोसड for दोसडा BKS हेलि म झंखहि आलु for हेल्लि म जंपहि आलु. K परमवरि जुझंतहो; M परिजुझतहो for पर उव्वरिअ जुज्झंतहों. KMST मा विलप असत्यं for मा जल्प मिथ्या. K परमवशिष्टामुपरि युध्यतः; M परेषामुपरि युध्यतः for परमुर्वरिता युध्यमानस्य K एक्क कुडुची पचहि रुभा; M एक्क कुडबा चंपहि रुभा; S एक्क कुडुंबा पंचहि रुद्धा.

**तद्योगजाश्च ॥ ३० ॥**

अपभ्रंशे अडडडुल्लाना योगभेदेभ्यो ये जायन्ते अड डुल्लअ डुल्लड इत्यादयः प्रत्ययाः तेऽपि स्वार्थे प्रायो भवन्ति ॥ ३० ॥

अड—

फोडेंति जे हिअडउँ अप्पणउँ ताहँ पराई कवण घिण।
रक्खेज्जहोँ तरुणहो अप्पणा बालहेँ जाया विसम थण ॥ ४९ ॥
[ = हे. ३५०.२ ]

[ पाटयतो यौ हृदयकमात्मनः तयोः परकीया का घृणा।
रक्ष्यन्ता तरुणा आत्मा बालाया जातौ विषमौ स्तनौ ॥ ]

डुल्लअ—

चूडुल्लउ चुण्णीहोइसइ [ १५५ ] ॥

डुल्लड—

सामिपसाअ सलज्जु पिउ सीमासंधिहि वासु।
देक्खिअ बाहुबलुल्लडउ धण मुंचइ नीसासु ॥ ५० ॥
[ = हे. ४३०.१ ]

एवं बाहुबलुल्ल इत्यादि ॥

---

30. KS om. अपभ्रंशे. KS डडअ इत्यादयः for अडडुल्ल अडुल्लउ इत्यादयः. KMS प्रयोज्या for प्रायो. St. 49. KS फोडंति for फोडेंति. KS हिअडइ for हिअडउँ. K अप्पणुअ; M अप्पणु; S अप्पउ for अप्पणउ. K परिभी, M परकी; S परिकि for पराई. K कवणु घिण; M कवणु घीणु for कवण घिण. KS रक्खिज्जउ for रक्खेज्जहोँ. KS अप्प; M अप्पणु for अप्पणा. M जाअहे for बालहेँ. KMS थणा for थण. B स्फोटयन्ति for पाटयतो. KMST चुण्णीहोसइ for चुण्णीहोइसइ. BKMST add चूडा चूर्णीभविष्यति. St.50. B om. सामिपसाअसलज्जु पिउ सीमासंधिहिवासु. KS आमिपसाअ° for सामिपसाअ°. KS पउ for पिउ. KMS सीमासंधिनिवासु; T °णिवासं for सीमासंधिहि वासु. KMS पेक्खिउ बाहुबल्लुल्लड धण मेल्लइ णीसासु for the second line. KS °संधिनिवासः for °संधौ वासः

**ङीतः स्त्रियाम् ॥ ३१ ॥**

अपभ्रंशे स्त्रिया वर्तमानान्नाम्न इतः प्राक्तनसूत्रद्वयविहितप्रत्ययान्तात्परो ङीप्रत्ययो भवति ॥ ३१ ॥

पहिआ दिट्ठी गोरडी दिट्ठी मग्गु निअंत ।
अंसूसासें कंचुअं तिंतुव्वाण करंत ॥ ५१ ॥
[ = हे. ४३१·१ ]

[ पथिक दृष्टा गौरी दृष्टा मार्गं पश्यन्ती ।
अश्रूच्छ्वासैः कञ्चुकं तिमितोद्वातं कुर्वती ॥ ]

**अदन्ताड्डा ॥ ३२ ॥**

अपभ्रंशे अडडडुल्लाना मध्ये यः अकारान्त. प्रत्ययः तदन्तनाम्नः स्त्रिया वर्तमानात् डाप्रत्ययो भवति । ङयपवादः ॥ ३२ ॥

पिउ आगअउ पत्तहौं झुणि कण्णडइ पइट्ठ ।
तहौं विरहहौं नासंतहौं धूलडिआ वि न दिट्ठ ॥ ५२ ॥
[ = हे. ४३२·१ ]

[ प्रियः आगतः प्राप्तस्य ध्वनिः कर्णे प्रविष्टः ।
तस्य विरहस्य नश्यतः धूलिरपि न दृष्टा ॥ ]

---

31. St. 51. BT वहिआ for पहिआ. T दिट्ठा for दिट्ठी. B तुट्टा for दिट्ठी. KS निअंतो for निअंत. B अंसुसाएं. K अंसूसासिह; M अंसूसासेह; S अंसूसासेहि. B कं चूआ; KMST कंचुआ for कंचुअं. B तोतुवाण करंत; K तिंतुप्पाण करता, MS किंतुपाण करंता for तिंतुव्वाण करंत; KST तिमितशुष्कं, M तिमिरशुष्क for तिमितोद्वात. After St. 51 KMST add एक्क कुडुल्ली पंचहि रुद्धी. 32.T डाः for डा in the Sūtra. K अडअलानां मध्ये; T अडुल्लाना मध्ये for अडडडुल्लाना मध्ये. St. 52. K पिदु; T पिहु for पिउ. K आअदु; M आअड for आगअउ. K सुवत्ताडी, M सुपत्तडी; T पत्तडि for पत्तहो. KS झणु for झुणि. KMS कण्णडइ; T कर्णंघइ for कण्णइ. KS चूलइआ वि ण दित्ता; M धूलहि वि ण दिट्ठा; T धूलडिआ वि विनट्ठ. KS सुवार्ताध्वनिः; M सुखार्ता for प्राप्तस्य ध्वनिः.

**इदतोऽति ॥ ३३ ॥**

अपभ्रंशे स्त्रिया वर्तमानस्य नाम्नो योऽकारस्तस्य अति अकारे प्रत्यये परे इकारो भवति । धूलडिआ वि न दिट्ठ [ ५२ ] ॥ स्त्रियामित्येव । झुणि कण्णडइ पइट्ठ [ ५२ ] ॥ ३३ ॥

**इदानीमेव्वहि ॥ ३४ ॥**

अपभ्रंशे इदानीमः स्थाने एव्वहि इति भवति । एँव्वहि होइ, इदानीं भवति ॥ ३४ ॥

हरि नच्चाविउ पंगणइ विम्हइ पाडिउ लोउ ।
एव्वहि राहपओहरहं जं भावइ तं होउ ॥ ५३ ॥
[ = हे. ४२०.२ ]

[ हरिर्नर्तित. प्राङ्गणे विस्मये पातितो लोकः ।
इदानीं राधापयोधरयोर्यद्भवति तद्भवतु ॥ ]

**एव जि ॥ ३५ ॥**

अपभ्रंशे एवशब्दस्थाने जि इति भवति । रामु जि, राम एव ॥ ३५ ॥

जाउ म जंतउ पल्लवह देक्खउँ कइ पय देइ ।
हिअइ तिरिच्छी हउँ जि पर पिउ डंबरइँ करेइ ॥ ५४ ॥
[ = हे. ४२०.१ ]

[ यातु, मा यान्तं पल्लवथ, पश्यामि कति पदानि ददाति ।
हृदये तिरश्चीना अहमेव, परं प्रियो डम्बराणि करोति ॥ ]

---

33. KM ण दिट्ठा for न दिट्ठ. K झणि कण्णडइ पइट्ठ for झुणि कण्णइ पइट्ठ. 34. MT एवहि for एव्वहि in the Sūtra. St 53. K णच्चादिदु for णच्चाविउ. M वगणइ for पंगणइ. KS वम्हइ पाडिदु लोदु for विम्हइ पाडिउ लोउ. MT एवहि for एव्वहि. KS तं तोइ for त होउ. KT यद्भावि तद्भवतु; M यद्भाति तद्भवतु for यद्भवति तद्भवतु. 35. T om. the Sūtra and its Com. down to डंबरइ in stanza 54. K एवशब्दो जि इति for एवशब्दस्थाने जि इति. KM om. रामु जि राम एव. St 54. KS पल्लवउं for पल्लवह. M कउ वअ for कइ पय. KS तिरिच्छा for तिरिच्छी. K करोइ for करेइ. KM मा यातु पल्लवकः for मा यान्तं पल्लवथ. KS तिर्यग्भूता for तिरश्चीना.

**एवमेम ॥ ३६ ॥**

एवं इत्यव्ययं एम इति भवति। एम रामु कुणइ, एवं रामः करोति ॥ ३६ ॥

पियसंगमि कउ निद्दडी पियहों परोक्खहों केम।
मह बिण्णि वि विण्णासिअ निद्द न एम न तेम ॥ ५५ ॥
[ = हे. ४१८·१ ]

[ प्रियसंगमे कुतो निद्रा प्रियस्य परोक्षस्य कथम्।
मम द्वे अपि विनाशिते, निद्रा न एवं न तथा ॥ ]

**नहि नाहि ॥ ३७ ॥**

नहि इत्यव्ययं नाहि इति भवति। नाहि धम्मु, न हि धर्मः ॥३७॥

एत्तहें मेह पिअन्ति जलु एत्तहें वडवाणलु आवट्टइ।
पेक्खु गहीरिम साअरहों एक्क वि कणिअ नाहि ओहट्टइ ॥ ५६ ॥
[ = हे. ४१९·४ ]

[ इतो मेघाः पिबन्ति जलमितो वडवानल आवर्तते।
पश्य गभीरत्वं सागरस्य एकापि कणिका नहि अपहीयते ॥ ]

**प्रत्युत पच्चलिउ ॥ ३८ ॥**

प्रत्युत इत्यव्ययं पच्चलिउ इति भवति। पच्चलिउ सुघु, प्रत्युत सुखम् ॥ ३८ ॥

---

36. T एमः for एम in the Sūtra. KM om. from एम रामु down to करोति. St 55. KS णिद्दइ; T निद्दासि for णिद्दडी. KM मइ बे वि विनासिअ निद्दड एम न जिअ तेम ( M एमह जाअ ) for the second half of stanza 55. KS मया द्वे अपि नाशिते for मम द्वे अपि विनाशिते. KMS नैवं निद्रा न जायते तथा for निद्रा नैव न तथा. 37. KM om. नाहि धम्मु नहि धर्मः. St 56. KS आवत्तइ; T आवग्गइ for आवट्टइ. M om. the second and 3rd lines of Stanza 56. KMS कणिआ for कणिअ. K नाहि-हिइ; M नाहिहिअ; T ओहग्गइ for ओहट्टइ. KST आवर्तयति for अपहीयते. 38. B पच्छ्लिउ, K पच्चलिउ; for पच्चालिउ in the Sūtra, Com. and illustrations.

सावसलोणी गोरडी नवखी क वि विसगंठि ।
भडु पच्चलिउ सो मरइ जासु न लग्गइ कंठि ॥ ५७ ॥
[ = हे. ४२०.३ ]

[ सर्वसलावण्या गौरी नवीना कापि विषग्रन्थिः ।
भटः प्रत्युत स म्रियते यस्य न लगति कण्ठे ॥ ]

ग्रन्थिरित्यत्र ' लिङ्गमतन्त्रम् ' [ ३.४.६७ ] इति सूत्रात्स्त्रीलिङ्गता ॥

**एवमेव एमइ ॥ ३९ ॥**

एवमेव इत्यव्ययं एमइ इति भवति । एमइ लोगु, एकमेव लोकः॥३९॥

अंगहिँ अंगु न मिलिउँ हलि अहरे अहरु न पत्तु ।
पिअ जोअन्तिहे मुहकवॅलु एमइ सुरउ समत्तु ॥ ५८ ॥
[ = हे. ३३२.२ ]

[ अङ्गैरङ्गं न मिलितं सखि अधरेण अधरो न प्राप्तः ।
प्रियस्य पश्यन्त्या मुखकमलं एवमेव सुरतं समाप्तम् ॥ ]

**समं समाणु ॥ ४० ॥**

समं इत्यव्ययं समाणु इति भवति । रामेण समाणु,रामेण समम् ॥४०॥

कंतु जं सीहहोँ उवमिअइ तं मह्रु खंडिउ माणु ।
सीह्रु अरक्खअ गअ हणइ पिउ पयरक्खसमाणु ॥ ५९ ॥
[ = हे. ४१८.२ ]

[ कान्तो यत्सिंहस्योपमीयते तन्मम खण्डितो मानः ।
सिंहोऽरक्षकान्गजान्हन्ति प्रियः पदरक्षैः समम् ॥ ]

---

St 57. K पडु for भडु. K सर्वसमलावण्या for सर्वसलावण्या. K नवका यापि; M नवका कापि. for नवीना कापि. M विषमग्रंथिः for विषग्रन्थिः. 39. KM om. एमइ लोगु, एवमेव लोकः. St. 58. M अंगहे for अंगहिँ. M अहि for हलि. KMST पिअहो निअतिहे for पिअ जोअंतिहेँ. KM एंवइ सुरंतु for एमइ सुरउ. KS हला for सखि. 40. KM om. रामेण समाणु, रामेण समम्. St. 59. KS कतु ह सीहहो हुवमिअइ for कंतु जं सीहहोँ उवमिअइ. KMT पररक्खसमाणु for पयरक्खसमाणु. KS यः for यत्. KMT पररक्षासमं for पदरक्षैः समम्.

**किल किर ॥ ४१ ॥**

अपभ्रंशे किल इत्यव्ययं किर इति भवति ॥ ४१ ॥

न किर खाइ न पिअइ न विद्दवइ धम्मि न वेच्चइ रूअडउ ।
इह किवणु न जाणइ जह जमहों खणेँण पहुच्चइ दूअडउ ॥ ६० ॥
[ = हे. ४१९.१ ]

[ न किल खादति न पिबति न विद्रवति धर्मे न व्ययति रूपकम् ।
इह कृपणो न जानाति यथा यमस्य क्षणेन प्रभवति दूतः ॥ ]

**पग्गिम प्राइम प्राउ प्राइव प्रायसः ॥ ४२ ॥**

प्रायस् इत्यव्ययं अपभ्रंशे पग्गिम प्राइम प्राउ प्राइव इति चतुर्धा प्रयोज्यम् । पग्गिम चवलु, प्रायश्चपलः इत्यादि ॥ ४२ ॥

एसी पिउ रूसेसुं हउँ रुट्ठी मइँ अणुणेइ ।
पग्गिम एइँ मणोरहइँ दुक्करु दइवु करेइ ॥ ६१ ॥
[ = हे. ४१४.४ ]

[ एष्यति प्रियः रुष्याम्यहं रुष्टां मामनुनयति ।
प्राय एतान्मनोरथान्दुष्करं दैवं कारयति ॥ ]

प्राइम मुणिहँ वि भंतडी ते मणिअडा गणन्ति ।
अखइ निरामइ परमपइ अज्ज वि पउ न लहन्ति ॥ ६२ ॥
[ = हे. ४१४.२ ]

---

**41.** St.60. M रूअड्ड इ for रूअडउ. M जिह for जह. KM डूअडउ; T दूआसउ for दूअडउ. K प्रयच्छति for व्ययति. KM प्रभविष्यति; T पर्याप्नोति for प्रभवति. 42. MT प्रायशः for प्रायसः. in the Sūtra. KM om. पग्गिम चवलु, प्रायश्चपल इत्यादि. St. 61. KS एसेइ; M एसिइ for एसी. KM रूसेउ for रूसेसुं. KM रुट्ठि मइ for रूट्ठी मइँ. KM एअ मणोरहअ for एइँ मणोरहइँ. KM दुक्खर दइउ करोइ. K प्रायश· for प्रायः. K दुष्करान्करोति दैवं. St. 62. KM प्राइंव; T प्राइव for प्राइम. KS तंतडी; M हंतडी for भंतडी. KM अक्खइं for अखइ. KMT लउ for पउ. K प्रायशो for प्रायः. K विश्रांतिः; T विश्रातिः for अपि भ्रान्तिः. K मणीन्मानयंति for मणीन्गणयन्ति. K अद्यापि लयं न लक्ष्यंते for अद्यापि पदं न लभन्ते.

[ प्रायो मुनीनामपि भ्रान्तिः ते मणीन्गणयन्ति ।
अक्षये निरामये परमपदे अद्यापि पद न लभन्ते ।। ]

अन्ने ते दीहर लोअण अन्नु तं भुअजुअलु ।
अन्नु सु घणथणहारु अन्नु जि मुहकॅवलु ।
अन्नु सु केसकलाउ अन्नु जि प्राउ विहि ।
जेण णिअंबिणि घडिअ स गुणलाअण्णणिहि ।। ६३ ।।
[ = हे. ४१४·१ ]

[ अन्ये ते दीर्घे लोचने अन्यत्तद् भुजयुगलम् ।
अन्यः स घनस्तनभारः अन्यदेव मुखकमलम् ।
अन्यः स केशकलापः अन्य एव प्रायो विधिः ।
येन नितम्बिनी घटिता सा गुणलावण्यनिधिः ।। ]

अंसुजलें प्राइव गोरिअहें सहि उव्वत्ता नअणसर ।
ते संमुह संपेसिआ देन्ति तिरिच्छी घत्त पर ।। ६४ ।।
[ = हे. ४१४·३ ]

[ अश्रुजलेन प्रायो गौर्याः सखि उद्वान्ते नयनसरसी ।
ते संमुखं संप्रेषिते ददतस्तिर्यग्घातं परम् ।। ]

**दिवा दिवे ।। ४३ ।।**

दिवा इत्यव्ययं दिवे इति भवति । दिवें दिवें गंगण्हाणु [८]।।४३।।

**सह सहुं ।। ४४ ।।**

सह इत्यव्ययं सहुं इति भवति ।। ४४ ।।

---

St. 63. KT अन्नु for अन्ने. K हुअजअलु; M हुअजअलं for भुअजुअलु. KMT थणभारु for थणहारु. K केसकलाउ पिहु; T केसकलापु सु for सु केसकलाउ. KS विहु for विहि. K एहु सगुणलाअण्णणिहि; M सा गुणलाअण्णगहि for स गुणलाअण्णणिहि. T घनस्तनहरः for घनस्तनभारः. KM सद्गुणलावण्यनिधिः for सा गुण°. St. 64. K गोरिहिहे; M गोरडिए for गोरिअहें. M उव्वत्ता; T उप्पंता for उव्वंद्दा. K णअणसरे for °सर. K उद्वांता आर्द्रा नयनशराः; M उद्वास्ता; T उद्यांता नयनशराः for उद्वान्ते नयनसरसी. KT संमुखं प्रेषिता ददति तिर्यक्क्षेपं परं.

जइ पवसंतें सहुँ न गय न मुअ विओएं तस्सु ।
लज्जिज्जइ संदेसडा देंती सुहअजणस्सु ॥ ६५ ॥

[ = हे. ४१९.३ ]

[ यदि प्रवसता सह न गता न मृता वियोगेन तस्य ।
लज्जते संदेशान्ददती सुभगजनस्य ॥ ]

**मा मं ॥ ४५ ॥**

मा इत्यव्ययं मं इति भवति । मं धणि करहि विसाउ ॥ ४५ ॥

[ = हे. ३८५.१ ]

प्रायोग्रहणात्

माणि पणट्ठइ जइ ण तणु तो देसडा चइज्ज ।
मा दुज्जणकरपल्लवेँहिँ दंसिज्जन्तु भमेज्ज ॥ ६६ ॥

[ = हे. ४१८.४ ]

[ माने प्रनष्टे यदि न तनुं ततो देशं त्यजेत् ।
मा दुर्जनकरपल्लवैर्दर्श्यमानो भ्रमेत् ॥ ]

**कुतः कउ कहंतिहु ॥ ४६ ॥**

अपभ्रंशे कुत इत्यव्ययं कउ कहंतिहु इति च भवति । कउ गदु, कहंतिहु गदु, कुतो गतः ॥ ४६ ॥

---

St.65.M जदि for जइ.B पवसंते; KM पवसंतेण; T पविसिंतेन for पवसंतें. B गयअ; K मुअ; T मअ for गय.B संदेहसडा for संदेसडा.B दिंतेहिं; KMT दोंतिहिं for देंती. KMT सह न मृता. KM लक्ष्यते for लज्जते.M सुभगजनकस्य for °जनस्य. 45. KM करउ for करहि. After विसाउ KT add मा धन्ये कुरु विषादं. St. 66. तो तं देसु जइज्ज for तो देसडा चइज्ज. MT हमेज्जा for भमेज्ज. K तदा तं देशं त्यजेत् for ततो देशं त्यजेत्. 46. M कहु for कउ in the Sūtra, Com. and illustrations. B कहुतिहु in the Sūtra and Com. K om. कउ गदु...कुतो गतः.

महु कन्तहेँ गुट्ठट्ठिअहेँ-कउ झुंपडा वलन्ति ।
अह रिउरुहिरे उल्लवइ अह अप्पणें न भंति ।। ६७ ।।
[ = हे. ४१६.१ ]

[ मम कान्तस्य गोष्ठस्थितस्य कुतः कुटीरकानि ज्वलन्ति ।
अथ रिपुरुधिरेणार्द्रयति अथात्मीयेन न भ्रान्तिः ।। ]

धूमु कहंतिहु उट्ठिअउ [ ७० ] ।।

**अथवा मनागहवइ मणाउं ।। ४७ ।।**

अथवा मनाक् इत्येतौ अहवइ मणाउं इति भवतः । अहवइ ण सुहं ताहु, अथवा न सुखं तस्य । किं पि मणाउं महु पिअहों [६९] ।। किमपि मनाङ् मम प्रियस्य ।।४७।।

जाइज्जइ ताहिँ देसडइ लब्भइ पिअहों पमाणु ।
जइ आवइ तो आणिअइ अहवइ तं जि निवाणु ।। ६८ ।।
[ = हे. ४१९.२ ]

[ गम्यते तत्र देशे लभ्यते प्रियस्य प्रमाणम् ।
यद्यागच्छति तदानीयते अथवा तदेव निर्वाणम् ।। ]

विहवि पणट्ठइ वंकडउ रिद्धिएँ जणसामण्णु ।
किं पि मणाउं महु पिअहों ससि अणुहरइ न अण्णु ।। ६९ ।।
[ = हे. ४१८.६ ]

[ विभवे प्रनष्टे वक्रः ऋद्धौ जनसामान्यः ।
किमपि मनाङ् मम प्रियस्य शशी अनुहरति नान्यः ।। ]

---

St. 67. M मम for महु. KM गोट्ठट्ठिअहो for गुट्ठ°. KM कहुं झंपडअ for कउ झुंपडा. KM °रुहिरे दुंजंतइ अह अप्पाणिं ण हृति for रिपुरुधिरेण...भ्रान्तिः. KMT तृणकुटीरकाः for कुटीरकानि. KMT विध्यापयति for आर्द्रयति. K यथात्मीयेन for अथात्मीयेन. K उट्ठिउ for उट्ठिअउ after which it gives its छाया. 47. M अभवइ for अहवइ in the Sūtra. KM तासां for तस्य. KM om. from किंपि मणाउं down to the छाया of St. 68. St. 69. B रिद्धी; KS रिट्ठिहि for रिद्धिएँ. K ऋद्धिभिः for ऋद्धौ.

